श्रीमन्महामहोपाध्यायगदाधरभट्टाचार्य-
विरचितो

# मुक्तिवादः ।

काशीस्थविश्वविद्यालयाध्यापकप 'अम्बाद'
शास्त्रिणामनुमत्या टोपले-इत्यु ० ढुण्
शास्त्रिणा कृतया विषमस्थलोपयुक्तया-
न्द्रिकाख्यविवृत्या समलङ्कृतः,
संशोधितश्च ।

चौखम्बासंस्कृतग्रन्थमालाप्रकाशक-श्रीयुक्तहरिदास-
गुप्तात्मज-जयकृष्णदासगुप्तमहाशयेन स्वकीये
'विद्याविलास' नाम्नि यन्त्रालये
मुद्रयित्वा प्रकाशित· ।

*Printed by*
JAYKRISHNA DASS GUPTA,
*at the Vidya Vilas Press.*
*Benares.*

# सटीकमुक्तिवादस्य शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| ननु | न च | २ | ३ |
| रीति | रिति | २ | २१ |
| प्रयोज्य | प्रयोज्यत्व | ३ | ६ |
| शङ्कने | शङ्कते | ७ | २१ |
| सामग्री | सामग्रीं | १ | २२ |
| [illegible]भाव | तदभावे | १२ | १४ |
| | भोगो | २८ | ६ |
| | न | ३० | २ |
| | मिति | ३३ | १७ |
| [illegible]विरो[illegible] | सिद्धान्तविरोधः | ३४ | ७ |
| [illegible] | चैतन्य एव | ३५ | १६ |
| | सृष्टिः | ४२ | १६ |
| शोडषकात् | शोडषकात् | ४३ | २१ |
| जन्म | जन्य | ४४ | १ |
| लाघववेने- | लाघवेन | ४६ | १६ |
| ब्रह्मास्मीतिं | ब्रह्मास्मीति | ६३ | ९ |
| सवेँषा | सर्वेषा | ६५ | ३ |
| विषंष्यत्वे | विशेष्यत्वं | ,, | १८ |
| श्रुत्याः | श्रुत्या | ६७ | १५ |
| इत्यशयः | इत्याशयः | ६९ | ११ |
| कार्यतावतावच्छेदक | कार्यतावच्छेदक | ,, | १९ |
| तत्कारणतया | तत्कारणता | ७० | ९ |
| सम्भवी | सम्भवि | ,, | १३ |
| त्यकाक्षरे | त्यकाक्षरं | ७१ | २२ |
| माबोधकस्य | मावश्यकस्य | ७२ | ९ |

अत्र यासामशुद्धीनामध्ययनमात्रेण बोधस्तासां न प्रवेशः कृत इति ।

# भूमिका ।

निर्विवादमिद विपश्चिदपश्चिमानां यद्धर्मार्थकाम-मोक्षेषु चतुर्विधेषु पुरुषार्थेषु मोक्ष एवात्यन्तिकः पुरुषार्थः । तत्सम्पत्तिश्च श्रवणमननिदिध्यासनाधीनात्मसाक्षात्काराधीना न स्वोत्पत्तौ सहकारितयापि कर्मादीनपेक्षते । तत्र निखिलशास्त्रधुरीणवेदान्तेषु प्रसिद्धापि सा नैयायिकमते जीवब्रह्मभेदस्य जाकरूकत्वात् कथं सगच्छत इत्याशङ्कापिशाचीप्रसारानिःसारणक्षमः श्रीमान् नव्यनैयायिकाग्रणीर्गदाधरभट्टाचार्यः "तदत्यन्ताभावविमोक्षोऽपवर्गः" इति प्राचीनमुक्तिपदार्थलक्षणघटकात्यन्तिकपदस्य प्रतिवादिदुर्घटकल्पनानिघर्षणपूर्वकं यया युक्त्याऽर्थं कृत्वा मुक्तिवादे तादृशीं मुक्तिं जीवब्रह्मयोर्भेदेपि स्थापितवान् तदिदं ग्रन्थगर्भावलोकनेनैव दृष्टिपथमुपयास्यति विदुषाम् ।

तदिदमीदृशसुनिपुणविद्वद्वरधुरीणमात्रज्ञेयग्रन्थव्याख्यानप्रथमसाहसं क्षमिष्यन्ते नैयायिकप्रवराः कर्मणा चानेन प्रीयतां जगदाधारः श्रीमान् पशुपतिरिति कृताञ्जलिः प्रार्थयते—

सुधीजनविधेयः—

ढुण्ढिराजशास्त्री ।

# सटीकमुक्तिवादस्य विषयसूचीपत्रम् ।

॥ श्रीगणेशाय नमः ॥

अथ श्रीमहामहोपाध्यायगदाधरभट्टाचार्यविरचितो

# मुक्तिवादः प्रारभ्यते

प्रयोजनमुद्दिश्यैव पुमांसस्तदुपाये प्रवर्त्तन्ते, अतः शास्त्रस्य प्रयोजनं प्रथमतः प्रदर्शयन्ति शास्त्रकृतः ।

॥ श्रीगणेशाय नमः ॥

भूतिमानप्यभूतिर्यो भूतिं जगति तन्वति ।
तं वन्दे भवतमोहहानयेऽखिलकारणम् ॥
नत्वा गुरुपदद्वन्द्वं नाथान्तवटुकाह्वयम् ।
क्रियते मुक्तिवादस्य विवृतिश्चान्द्रकाभिधा ॥

इह खलु शास्त्रकृतो मुनयोऽपि शास्त्रादावपवर्ग आयशः तत्प्रयोजनं दर्शयन्ति तत् किमर्थमित्याशङ्कानिरासो शास्त्रकृत इत्यन्तेन ग्रन्थेनाविष्कृतः । प्रयोजनमिष्टम्, उद्दिश्य तत्साधनत्वेन निर्णीय, पुमांस कृतिसाध्यताज्ञानवन्तः समर्था इति यावत् । तेन स्त्रीणामपि सङ्ग्रहोऽन्यथा तासामपि तादृशप्रवृत्तिदर्शनात्तद्व्यावृत्त्या न्यूनता स्यात् । शास्त्रकृतः गौतमादयः । शास्त्रप्रयोजनादर्शने प्रयोजनसाधनत्वाज्ञानेन परस्याप्रवृत्तौ परप्रतिपत्तिमात्रफलकशास्त्रकरणस्य निष्फलत्वापत्तेस्तथाचाधिजिगांसूनां ग्रन्थापादनकप्रवृत्तिरेव प्रयोजनप्रदर्शनस्य फल-

तत्र स्वतःप्रयोजनं सुखं तद्भोगो दुःखाभावश्च । तत्त्व-श्चाऽन्येच्छानधीनेच्छाविषयत्वम्, नतु प्रयोजनान्तरा-

---

मिति भावः । ननु तथापि नात्र प्रयोजनं प्रदर्शित गदाधरेणेति न्यूनत्वमेवास्य ग्रन्थस्येति वाच्यम् एतद्ग्र-न्थस्य भगवद्गौतमप्रणीतशास्त्रपदार्थ-निपादकत्वात्त च्छास्त्रप्रयोजनमेवास्य प्रयोजनमिति ज्ञायतेऽतो मुक्ति-ज्ञानद्वारा तत्प्रवर्तकस्य मुक्तिनिर्वचनस्याऽस्य ग्रन्थस्या पवर्गप्रयोजनत्वं स्फुटमेवेति न न्यूनतेति भाव । अपवर्गे मुख्यप्रयोजनत्वं व्यवस्थापयन्नु मुख्य गौणञ्च प्रयोजनं लक्षयति तत्रेति । तत्र तेषु प्रयोजनेषु मध्ये स्वतःप्रयोजनं स्वतःप्रयोजनपदार्थः । सुख तद्भोगो दुःखाभावश्चेति लक्ष्यनिर्देशः । तद्भोगो सुखसाक्षात्कारः । ननु सुख साक्षात्कारः कथ मुख्यप्रयोजनम्, सुखं मे भवत्वितीच्छाया एव प्रवर्तकत्वात् ननु सुख जानीयामिती च्छायास्तथा च तस्य लक्ष्यत्वमसङ्गतमिति चेन्न सुखेच्छाया इव तत्साक्षात्कारेच्छाया अपि अनुभवसाक्ष्येन प्रवृत्तिजनकत्वात्, अन्यथा दुःखाभाव स्यापि प्रवृत्त्यजनकत्वापत्त्या स्वतःप्रयोजनत्वानुप पत्तिः, नित्यसुखसाक्षात्कारो मुक्तिरिति भट्टमतास-ङ्गतिश्च स्यात् । तस्य स्वतःप्रयोजनत्वाभावे तदुपाये योगाभ्यासादौ प्रवृत्तिरनुपपद्यतेति गदाधरभट्टाचार्याणा-माशयः । अन्येच्छानधीन इति । स्वान्या स्वसमानाधि-करणा या इच्छा तदप्रयोज्याया इच्छायाः साध्यत्वेन

जनकत्वे सति प्रयोजनत्वम्, सुखसाक्षात्काररूपभोगं प्रति विषयतया जनके सुखेऽव्याप्तेः । गौणप्रयोजन-

---

या विषयता तदाश्रयत्वमित्यर्थः । एवं द्वितीयेच्छा ।

अत्रायमनुगमप्रकारः । इच्छाविशिष्टेच्छाविषयत्व स्वतःप्रयोजनत्वम् । वैशिष्ट्यञ्च स्वविशिष्टेच्छाप्रयोज्यसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्वसम्बन्धेन । वैशिष्ट्यं स्वभिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन । स्वद्वयं प्रथमेच्छापरम । ईश्वरेच्छाया ईश्वरेच्छाविशिष्टत्वेन तद्विषयत्वमादाय घटादावतिव्याप्तिवारणाय स्वभिन्नत्वनिवेशः । जीवेश्वरेच्छाभेदाङ्गीकारे तद्दोषतादवस्थ्यमतः सामानाधिकरण्येति । उभयसम्बन्धनिवेशे ईश्वरेच्छाया धर्तुमशक्यत्वान्न दोषः मम सुखं भूयादितीच्छया आत्मादेर्विषयत्वमादाय तत्रातिव्याप्तिवारणाय साध्यत्वेन विषयत्वनिवेशश्चात्र द्रष्टव्यः । एतेन स्वत्वस्याननुगमान्न लक्षणासम्भवदोष इति । सुखस्यापि योग्यविभुविशेषगुणतया दुःखनाशं प्रति हेतुतया तत्राव्याप्तिवारणायान्यदिति । तदर्थश्च सुखप्रयोजनदुःखध्वसभिन्नत्वम् । तथा च दुःखध्वसभिन्नप्रयोजनाजनकत्वे सतीति लाभः । प्रयोजनत्वमिति । तच्च प्रवृत्त्युद्देश्यत्वं प्रवृत्तिजनकेच्छाविषयत्वमिति यावत् । दुःखाभावसाक्षात्कारादावतिव्याप्तिवारणाय तन्निवेशः । तत्प्रयोजनत्वस्य चाग्रे "दुःखं मे मा भूदित्युद्दिश्यैव प्रवर्तते न हि दुःखाभावं जानीयामि 'त्यादि-

श्वान्येच्छाधीनेच्छाविषयो भोजनादिः, तत्र सुखादिरूपफलानुसन्धानादेवेच्छोत्पत्तेः । दुःखासम्भिन्नसुखरूपतया स्वर्गस्येवाऽऽन्वीक्षिक्यादिशास्त्रफलस्याप्यपवर्गस्यात्यान्तिकदुःखनिवृत्तिरूपस्य स्वत एव प्रयोजनत्वम् ।

---

ना मणिकारेण मुक्तिवादे खण्डितत्वात् । प्रवृत्त्युद्देश्ये घटादावतिव्याप्तिवारणाय सत्यन्तनिवेशः । सुखेऽव्याप्तेरिति । एतच्च स्वमतमादाय । प्राचीनमते सुखसाक्षात्कारस्याप्रयोजनत्वात् । एतच्च मुक्तिवादचिन्तामण्यादौ स्पष्टम् । दुःखासम्भिन्नेति । असंभिन्नमसमिश्रम् । तत्त्वञ्च दुःखाविशिष्टान्यत्वम् । वैशिष्ट्यञ्च स्वावच्छेदकीभूतशरीरावच्छिन्नत्वस्वाव्यहितोत्तरत्वोभयसम्बन्धेन । अनन्तरजायमानदुःखाग्रस्तत्वम् इति यावत् । तथाचोक्तम् ।

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम् ॥ इति ।

अभिलाषोपनीतत्वञ्च स्वप्रयोजककामनाप्रयोज्यत्वम् । अत्र दुःखासम्भिन्नत्वादिकं प्रत्येकं स्वर्गलक्षणम् तेन नित्यसुखाभिव्यक्तिर्मुक्तिरिति–मते नित्यसुखे नातिव्याप्तिरिति भावः ।

मुक्तौ मणिकारोक्तमनुमानं प्रमाणमाह दुःखत्वमित्यादिना । दुःखत्वपक्षानुमाने निखिलप्राणिनां भोगनिवृत्त्या तज्जनकादृष्टनिवृत्त्या च दुःखध्वंसे दुःख-

मुक्तौ प्रमाणन्तु—दुःखत्वं देवदत्तदुःखत्वं वा स्वाश्रयाऽसमानकालीनध्वंसप्रतियोगिवृत्ति कार्यमात्र-

त्वावच्छिन्नासामानाधिकरण्यं बोध्यम् । ननु सर्वः कालो भोगवानदृष्टवान् वा कालत्वादेतत्कालवदि-त्यनुमानेन सर्वदा भोगादृष्टादिसिद्धौ कथमुक्तासामानाधिकरण्यमित्यत आह देवदत्तदुःखत्व वेति । एतेनाखिलजीवानां मोक्षसिद्धौ सर्वानुभवसिद्धभोगादृष्टादिप्रवाहस्यानन्तत्वभङ्गप्रसङ्गरूपं प्रथमपक्षे दूषणं निरस्तम् । अत्र स्वतादात्म्यस्वविशिष्टध्वंसप्रतियोगिवृत्तित्वोभयसम्बन्धेन धर्मस्य साध्यतेति तात्पर्यम् । स्वपदं धर्मपरम् । ध्वंसे स्ववैशिष्ट्यञ्च स्वाश्रयसमानकालीनत्वसम्बन्धावच्छिन्नावच्छेदकताकभेदवत्त्वसम्बन्धेन । अन्यथा स्वत्वस्याननुगततया यदि स्वपदेन दुःखत्वं ध्रियते तदा एतत्प्रदीपत्वादेरपि दुःखत्वाश्रयासमानकालीनध्वंसप्रतियोगिवृत्तित्वरूपसाध्यस्य सन्दिग्धतया दृष्टान्तत्वानुपपत्तिः । यदि चैतत्प्रदीपत्वं गृह्यते तदा सिद्धसाधनमर्थान्तरतापातश्चेति । प्राचामभिप्रेतमनुगतमखण्डोपाधिरूपं वा स्वत्वमप्रामाणिकतया दुर्वचमेव । पक्षतावच्छेदकहेतुतावच्छेदकसाधारणमिदं साध्यकोटिप्रविष्टमित्यपि न वाच्यम् पूर्वोक्तादृष्टान्तता-दूषणस्य तादवस्थ्यात् । कार्यमात्रवृत्तित्वादिति । तच्च कार्येतरावृत्तित्वे सति कार्यवृत्तित्वम् । गुणत्वादौ व्यभिचारनिरासाय सत्यन्त विशेषणम् । गगनत्वादौ व्यभिचारवारणाय च विशेष्यदलम् । ननु घटत्वादौ साध्य-

वृत्तित्वात् सन्ततित्वाद्वा एतत्प्रदीपत्ववत् । सन्तति-त्वं च नानाकालीनकार्यमात्रवृत्तित्वम् । "आत्मा ज्ञा-तव्यो न स पुनरावर्तते" इति श्रुतिश्च प्रमाणम् । आ-

---

स्थ सन्दिग्धतया व्यभिचारसन्देहेन व्याप्तिरेव कथं गृही-ता स्यादित्यत आह सन्ततित्वाद्वेति । सन्ततित्वं च जातिविशेषो तत्तद्वर्त्तिजन्यदीपसमुदायवृत्तिः एष दीप इत्यनुगतप्रतीतिसाक्षिकः प्रसिद्ध एव । नानेति । स्वेतर त् स्वसमानाधिकरण स्वोत्पत्तिक्षणोत्पत्तिक च यत् त-द्वृत्तित्वे सति कार्यवृत्तित्वम् तदर्थः । कार्यपरगुणत्वा दिकमादाय व्यभिचारवारणाय सत्यन्तम् । हेत्वसिद्धि निराकर्तुं स्वेतरेति । अन्यदीयतत्कालोत्पन्नदु खमादाय स्वरूपासिद्धिनिवारणाय स्वसमानाधिकरणेति । चि भिन्नकालीनस्वसमानाधिकरणदुःखमादायोक्तदोषनिरा-सार्थं स्वोत्पत्तिक्षणेति । न चात्रानुमानेऽप्रयोजकत्वश ङ्कापिशाची प्रसरति प्रधानकारणोच्छेदे सन्तत्याश्रयवी पादेरत्यन्तोच्छेददर्शनात् प्रकृतेऽपि दुःखमूलस्यात्म-नि शरीराद्यभेदवासनाया श्रवणादिभिरुच्छेदसम्भ वेन तदुत्तरं दुःखसत्त्वे सन्ततित्वं यदि सन्तत्या-श्रयासमानकालीनध्वंसप्रतियोगिवृत्तिवृत्तित्वव्यभिचारि स्याद् तदा चिरमूलोच्छेदकालीनवृत्तिवृत्ति स्यादिति प्रसङ्गस्यैव प्रयोजकत्वात् इति ध्येयम् । आत्मे-ति । लिङ्वत् तदर्थे विहितस्य तव्यप्रत्ययस्या-पि स्वघटितवाक्योपस्थापितार्थवाङ्बोध्यत्वरूपेष्टसा

वर्तते—शरीरी भवति इत्यर्थः । नचापवर्गस्योक्तरूपस्य सुखविरोधितया न पुरुषार्थत्वसम्भवः सुखाभावनियतत्वेऽपि दुःखाभावत्वेनात्यन्तिकत्वाविशेषितेन च तद्विशेषितेन च तत्रेच्छोत्पत्तौ बाधकाभावेन प्रयोजन-

---

भवनत्वबोधकताऽनियमेनात्राऽपि अत्यन्तशरीरसम्बन्धाभावरूपेष्टसाधनज्ञानविषय आत्मेति तदर्थः । न स पुन रावर्तत इत्यादिनोक्तरूपेष्टसाधनत्वस्यैव बोधनात् । आवर्तत इत्यस्यार्थमाह शरीरी भवतीति । न पुनर्देहेन्द्रियादिसम्बन्धादात्मनो भोग इत्यर्थः । ननु गुरुजनसम्भाषणादौ यथा कामिनीसम्भोगजन्यसुखविरोधितया नेच्छा तथा सुखप्रतिबन्धिनि अपवर्गे नेच्छा स्यात् इत्याह न चेति । उक्तरूपस्य दुःखध्वंसरूपस्य । सुखविरोधितयेति । सुखविरोधिता च सुखावच्छेदककालावच्छिन्नतदधिकरणवृत्तित्वाभावरूपसुखाभावव्याप्यताबाधकाभावेन, कारणविरहात्मकत्वेनेति तात्पर्यम् । समाधत्ते सुखाभावेति । साङ्ख्यमतेनाह तद्विशेषितेनेति । तथा च साङ्ख्यसूत्रम् "तदत्यन्तविमोक्षोऽपवर्गः" । प्रयोजनत्वोपपत्तेः प्रवर्तकेच्छाविषयत्वोपपत्तेः । ननु दुःखाभावत्वेनेच्छोत्पत्तावपि तत्र सुखाभावस्य नियततया द्वेषसम्भवादिच्छासम्भव इत्याशयेनाशङ्कते न चेति । तत्र दुःखध्वंसरूपमुक्तौ । द्वेषसामग्र्या इच्छां प्रति प्रतिबन्धकत्वादिति भावः । द्वेषविषयस्यायोग्यत्वादिति । स्वतःप्रयोजनस्य

त्वोपपत्तेः । नच सुखाभावानियतत्वेन द्वेषसम्भवात् तत्र नेच्छासम्भव इति वाच्यम् । स्वतः प्रयोजनस्य द्वेषविषयत्वायोग्यत्वात् । ननु धर्मादिनाशकतत्त्वज्ञानद्वारा सुखनिवृत्तिसाधकत्वेन मोक्षोपाये योगाभ्यासादौ द्वेषसम्भवाद्विशेषदर्शिनां प्रवृत्त्यनुपपत्तिरिति चेत् । सुखेषूत्कटरागवतां विषयिणां सुखाभावे उत्कटद्वेषोदयेन मोक्षोपाये न भवत्येव प्रवृत्तिः । तदुक्तं मणिकृता—"तस्मादविवेकिनः सुखमात्रलिप्सवो बहुतरदुःखा-

---

स्वतोऽद्विष्टप्रतियोगिकस्य स्वतोद्वेष्यत्वाभावात् भावाभावयोरेकधर्मकत्वासम्भवात् द्विष्टसाधनताज्ञानघटितसामग्र्यभावाच्च । नन्वपवर्गे मा भूद्द्वेषः किन्तु तत्साधकयोगाभ्यासादौ तु स्यादेव सुखसाधनधर्मनाशकतत्त्वज्ञानोत्पादनद्वारा सुखाभावरूपद्विष्टसम्पादकत्वात् । तथाचेच्छायां द्वेषसामग्र्याः प्रतिबन्धकत्वेन तत्रेच्छाऽसम्भवेन योगाभ्यासादौ प्रवृत्तिर्न स्यादित्याशयेनाशङ्कते नन्विति । सुखेषूत्कटरागिणां तत्रेष्टापत्त्या परिहरति सुखेष्वित्यादि । तेषां सुखाभावे द्वेषस्यावश्यम्भावेन मुक्त्युपाये योगाभ्यासादौ प्रवृत्तिप्रतिबन्ध एवेत्यर्थः । तत्रापसिद्धान्तत्वशङ्कां निराकर्तुं चिन्तामणिकारमतमाह तदुक्तमिति । तस्मादिति । दुःखाभाववशायां सुखं नेति ज्ञानस्य दुःखाभावार्थिप्रवृत्तिप्रतिबन्धकत्वादित्यर्थः । अस्तु ते अत्राधिकारिण इत्यत्राऽऽश्वयां

नुविद्धं सुखमुद्दिश्य "शिरो मदीयं यदि याति यातु" इति कृत्वा परदारादिषु प्रवर्त्तमाना

वरं वृन्दावने (रम्ये) शून्ये शृगालत्वं वृणोम्यहम् ।
नतु वैशेषिकीं मुक्तिं प्रार्थयामि कदाचन ॥

इत्यादि वदन्तो नात्राधिकारिणः ये च विवेकिनोऽस्मिन् संसारकान्तारे कियन्ति दुःखदु-

बोध्यः । बहुतरदुःखानुविद्धामिति । बहुतरदुःखजनकसामग्रीनियतसामग्रीसम्पाद्यत्वेन तत्संवलितमिति भावः । शिर इति ।

युष्मत्कृते खञ्जनमञ्जुलाक्षि ।
शिरो मदीयं यदि याति यातु ॥
नीतानि नाशं जनकात्मजार्थे ।
दशाननेनापि दशाननानि ॥ इति ॥

एतेन बहुतरदुःखानुविद्धत्वज्ञानमस्ति तत्रेति व्यञ्जितम् । वैशेषिकी वैशेषिकशास्त्रप्रसिद्धाम् । वदन्त इत्यनेन सुख एवोत्कटेच्छा प्रदर्शिता । स्यादेतत् सर्व एव शरीरिणो यदि सुखमेवेच्छन्ति तदेदङ्मुक्तिनिरूपणं व्यर्थमापतितम् तद्भिन्नेऽधिन्यपवर्गे कस्यापि कामनाऽनुदयेनाधिकारिणामेवाभावात् अत आह ये चेति । विवेकिनः सांसारिकसुखमोक्षयोः हेयत्वोपादेयत्वादिविवेचनसमर्था. । संसारकान्तारे संसार एव कान्तारं तस्मिन् स्त्रीपुत्रादिरूपदुर्गवर्त्मनि । दुर्गमत्वं चास्येष्टावियोगादिरूप-

र्दिनानि कियती वा सुखखद्योतिका इति कुपितफणि-फणामण्डलच्छायप्रतिममिदमिति मन्यमाना: सुखमपि हातुमिच्छन्ति तेऽत्राधिकारिण:" इति । विवेकिनान्तु बहुतरदु:खानुविद्धतया सुखं नोत्कटराग इति तद-भावेऽपि नोत्कटद्वेष इति बलवद्द्वेषविषयसाधनत्वस्यैव प्रवृत्तिविरोधितया मोक्षोपाये न प्रवृत्त्यनुपपत्ति: । स्वर्गेऽपि पातभयादिजन्यदु:खानुविद्धतया क्षयितया

---

कण्टकाद्यावृतत्वेन कामादिरूपदस्युमत्त्वेन च बोध्यम् । दु:खेषु दु:खेतरसाक्षात्काराद्यभिचारिकत्वमधिकतरत्वं च दुर्दिनसाम्यप्रयोजकम् सुखेषु इतरज्ञानानभिभावक त्वम् अल्पीयस्त्वं च खद्योतसाम्यनिर्वाहकं बोध्यम् । खद्योतिका इत्यनन्तरं ज्ञानेनेति पूरणीयम् । तादृश-ज्ञानार्थकश्चेतिपदं मन्यमाना इत्यनेनान्वयनीयम् । कुपि-तेत्यादि । कुपितो य: फणी सर्पस्तस्य यत् फणामण्डलं तस्य छायया प्रतिमं तुल्यमित्यर्थ: । कुपितपदेन यथा कश्चित् पान्थ इतस्ततो भूरिभ्रमणश्रान्तो दु:सहार्ककिर णसमूहसन्तापशान्तीच्छयोक्तविधच्छायामाश्रित्य दु:खा-तिशयाभिभूतो जायते तथैव संसाराश्रितोपीति अवश्य-म्भाविदंशनजन्यदु:खभागित्वं व्यञ्जितम् । अधिकारिण इत्यन्तो मणिग्रन्थ: । ननु विषयिणामिव विवेकिनामपि मोक्षोपाये प्रवृत्तिर्न जायेत सामग्रीसाम्येन फलोदयस्या-निवार्यत्वात् इत्यत: सामग्रीं विभज्य विवेकिनान्तदभावं

च न विवेकिनामुत्कटो रागः । रागद्वेषयोरुत्कटत्वं जातिविशेषः प्रवृत्तिनिवृत्तिभ्यां कल्पनीयः । तन्नियामिका च सामग्री तत्तज्ज्ञानव्यक्त्यादिघटिताऽननुगतैव, तुल्येऽपि बहुतरदुःखानुविद्धत्वादिज्ञाने सुखतदभावयोर्विषयिणामुत्कटरागोत्कटद्वेषोदयात् विवेकिनान्तदनुदयात् । अथ

> दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते ।
> नहि मूर्च्छाद्यवस्थायां प्रवृत्तो दृश्यते सुधीः ॥

---

दर्शयति विवेकिनान्त्विति । विवेकिनां दुःखबहुलतया सुखे नोत्कटराग इति तदभावेपि प्रवृत्त्यप्रतिबन्धात् इति भावः । स्यादेतत् ऐहिक सुख तावत् बहुतरदुःखानुविद्धतया विवेकिनां प्रवृत्त्यजनकमस्तु स्वर्गसुखस्य दुःखासम्भिन्नतया तत्रोत्कटेच्छा जायते एव इत्यत आह स्वर्गेपीति । क्षीणे पुण्ये मर्त्यलोकं विशन्तीति भगवदुक्तेः । क्षयितयेति । दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्त इति कापिलोक्तेः । प्रवृत्तिनिवृत्तिभ्यामिति । कल्पना चात्रानुमानम् । तद्यथा रागनिष्ठप्रवृत्तिजनकत्वं किञ्चिद्धर्मावच्छिन्न जनकतात्वात् घटजनकतावत् न चेच्छात्वावच्छिन्न तत्सम्भवति अनुत्कटेच्छायामिच्छात्वस्य तादृशजनकताव्यभिचारात् । तथाचेच्छात्वावच्छिन्नत्वस्य बाधनिश्चयात्तदवान्तरधर्मावच्छिन्नत्वासि-

इति न मुक्तिज्ञानं सम्भवतीति चेन्न । नहि दुःखाभावं जानीयामित्युद्दिश्य प्रवृत्तिः किन्तु दुःखं मे माभूदित्युद्दिश्य स्वत एव बहुतरदुःखजर्जरकलेवरा दुःखाभावमुद्दिश्य मरणे प्रवर्तमाना दृश्यन्ते ।

---

च्छिः । स च धर्मो बाधकाभावाज्ज्ञातिरेवेति । तन्नियामिकेति । उत्कटरागद्वेषनियामिकेत्यर्थः । तत्तज्ज्ञानव्यक्त्येति । प्रतिबन्धकाभावरूपकारणस्य प्रतियोगिविधया बहुतरदुःखानुविद्धत्वादिज्ञानव्यक्त्येत्यर्थः । अननुगतैवेति । तथाच फलदर्शनादर्शनाभ्यां सामग्र्याः सत्त्वासत्त्वे कल्पनीये इति भावः । तादृशज्ञानाभावत्वेनानुगतकारणताकल्पने बाधकमाह तुल्येऽपीति । तथा च विवेकिनिष्ठबहुतरदु.खानुविद्धत्वपातभयादिजन्यदु.खानुविद्धत्वादिज्ञानव्यक्तेरेव सुखे उत्कटराग तदभावे उत्कटद्वेष च प्रति प्रतिबन्धकत्व कल्पनीयम् न तु विषयिनिष्ठतादृशज्ञानव्यक्तेरिति हृदयम् । अथेत्यादि दृश्यन्त इत्यन्तः पाठो मुद्रितपुस्तके नोपलभ्यते सरलश्चेति टीकायामुपेक्षितो वेदितव्यः ननु अस्तु उक्तयुक्त्या मोक्षोपाय प्रवृत्तिः, किन्तु मोक्षो यदि कलृप्तोपायसाध्यः स्यात् भवेन्न यदि मुक्तित्व जन्यतावच्छेदकं तदा तदुपाये योगाभ्यासादौ प्रवृत्तिरुपपद्यत इति आशय-

अथ दुःखनिवृत्तिः दुःखस्य ध्वंसरूपोऽभावः, न तु प्रागभावात्यन्ताभावौ नित्यत्वेनाऽसाध्यत्वात् ध्वंसस्य चाऽनन्तरोत्पन्नविशेषगुणादेव सम्भवेन न तत्त्वज्ञानाद्युपयोगः। ननु स्वसमानाधिकरणदुःखप्रागभावाऽसमानकालीनत्वरूपात्यन्तिकत्वविशेषितदुःखध्वंसत्वरूपापवर्गत्वावच्छिन्नत्वस्य तत्त्वज्ञाननिरपेक्षकारणान्तराज्ञ

---

नाशङ्कते अथेति । अत्यन्तदुःखनिवृत्तिरूपमुक्तिपदार्थे दुःखनिवृत्तिशब्दार्थस्य कल्पत्रयेणासम्भवं दर्शयति ध्वंसरूपोऽभाव इति। प्रागभावात्यन्ताभावयोः नित्यत्वेन प्रागभावाप्रतियोगित्वेनासाध्यत्वात् अजन्यत्वात्। तथाचाजन्यस्य प्रवृत्त्यनुद्देश्यत्वान्न तमुद्दिश्य योगाद्युपाये प्रवृत्तिरिति कल्पद्वयानिरासः। ध्वंसपक्षे तदव्यवहितोत्तरोत्पन्नविशेषगुणादेव दुःखध्वंससम्भवेन न तत्र तत्त्वज्ञानाद्युपायापेक्षेति भावः। कारणत्वकुक्षिप्रविष्टान्वयव्यतिरेकव्याप्तिघटितान्वयव्यतिरेकव्यभिचारासम्भवात् तत्त्वज्ञानस्यात्यन्तदुःखनिवृत्तिरूपापवर्गत्वावच्छिन्नं प्रति कारणत्वे को दोष इत्याशयेनाक्षिप्य समाधत्ते नन्विति। स्वपदं दुःखध्वंसपरम्। प्रलयकालीनदुःखध्वंसानां पुरुषान्तरीयदुःखप्रागभावसमानकालीनतया तत्राव्याप्तिवारणाय स्वसमानाधिकरणेति। इदानीन्तनदुःखध्वंसेऽतिव्याप्तिवारणार्थं दुःखप्रागभावासमानकालीनेति। अर्थसमाजरूपेति। क्लृप्तसामग्रीसंवलनप्रयोज्यस्वघटकविशेषणविशिष्टक्लृप्त-

निर्वाह इति चेदेवमपि न तादृशधर्मस्य तत्त्वज्ञान-जन्यतावच्छेदकत्वसम्भवः। चरमदुःखध्वंसदशायां त द्ध्रत्यात्मनि दुःखजनकाधर्मरूपकारणविरहेण दुःखा-नुत्पत्त्याऽर्थवशादेव तस्य स्वसमानाधिकरणदुःखाऽस-मानकालीनत्वनिर्वाहात्। अर्थसमाजरूपबाधकग्रस्तस्य कार्यतानवच्छेदकत्वात्। अन्यथा पुरुषान्तरीयदुःखास-मानकालीनदुःखध्वंसत्वादेरपि किञ्चित्कारणकार्यतावच्छे दकत्वापातात्। नैवम्। अर्थसमाजस्थले हि साधकाभाव एव कार्यतावच्छेदकत्वबाधकः उपदर्शितमुक्तित्वावच्छिन्नं प्रति तत्त्वज्ञानहेतुतायाः श्रुतिस्मृत्यादिसाक्षिकतया न बा धः। माभूद्वा तादृशमुक्तित्वावच्छिन्नं प्रति कारणता तदवच्छिन्ने तत्त्वज्ञानस्य प्रयोजकत्वं दुर्वारमेव, तत्त्वा न

---

सामग्रीरूपार्थसमाजग्रस्ततया न तत्त्वज्ञानजन्यतावच्छेद-कत्वमुक्तापवर्गत्वस्येति बाधकसत्त्वादेवोक्तकार्यकारण-भावासम्भव इति तात्पर्यम्। सिद्धान्तमाह नैवमिति। न बाध इति। स्वतन्त्रप्रमाणस्य श्रुतिस्मृतिरूपस्य शा-ब्दस्य साधकत्वादिति भावः। साधकाभावरूपबाधका-सत्त्वेपि निष्प्रयोजनत्वगौरवरूपबाधकद्वयमस्त्येवेत्या-शङ्क्याह माभूद्वेति। स्वरूपसम्बन्धविशेष इति। यथा दण्डाभावाद्घटाभाव इत्यादौ दण्डाभावाद्यन्वयी पञ्चम्य-र्थः। तन्निष्ठान्यथासिद्धिभिन्नान्यथासिद्धिशून्यत्वे सति

ना पापप्रवाहविच्छेदस्यासम्भवेन दुःखानुवृत्तेरावश्यक-
तया दुःखध्वंसे दुःखासमानकालीनत्वानिर्वाहात् । येन
विना यद्धर्मावच्छिन्नानिर्वाहस्तस्यैव तदवच्छिन्नप्रयोजक-
त्वात । प्रयोजकत्वञ्च स्वरूपसम्बन्धविशेषः । इष्टप्रयो-
जकत्वज्ञानमेवोपायेच्छाहेतुरिति मुमुक्षया तत्त्वज्ञानेच्छा-
निर्वाहः । "दुःखेनात्यन्तं विमुक्तश्चरति" "अशरीरं वा
वसन्तं न प्रियाप्रिये स्पृशतः" इत्यादिश्रुतिवाक्यानि च
तत्त्वज्ञानवतां दुःखात्यन्तविमुक्तिबोधकानि विमुक्ति-
प्रयोजकत्वपराण्येवेति ।

---

कार्याव्यवहितपूर्ववृत्तित्वमिति नव्याः । नन्वेवं तत्त्वज्ञा-
नस्य मोक्षसाधनत्वप्रतिपादकश्रुतीनामप्रामाण्यप्रसङ्गः
स्यादतस्तासामपि प्रयोजकत्वमेवेत्याशयेन समाधत्ते
दुःखेनेत्यादि । तृतीयार्थः प्रतियोगित्वम् । मुच्-धात्वर्थो
नाशः । स्वसमानाधिकरणदुःखासमानकालीनार्थकात्य-
न्तपदं च क्रियाविशेषणम् तथाच दुःखप्रतियोगिका-
त्यन्तनाशाश्रयश्चरति तिष्ठतीत्यर्थः । अशरीरमिति । वा-
वेति सम्बोधनम् सन्तमात्मानम् तथाच तत्त्वज्ञानादिना
शरीररहितमात्मानं प्रियाप्रिये सुखदुःखे न स्पृशतः न
सम्बध्नीत इत्यर्थः । आचार्यास्तु वावसन्तमिति यङ्-
लुकि सिद्धम् छान्दसत्वान्नकारागमश्च । तथाच शरीर-
रहित सत् अतिशयेन वसन्तं उत्तरावधिराहित्येन व-
सन्तमिति यावत् । तेन संसारिणोपि क्षणं शरीर-

यत्तु दुःखानुत्पाद एव मोक्षः स च प्रागभावरूपतयाऽजन्योऽपि तत्त्वज्ञानादिसाध्यः, क्षेमसाधारणसाधनताज्ञानस्यैव च प्रवर्तकत्वम् दुःखं मे मा भूदित्युद्दिश्य वैदिके प्रायश्चित्तादौ लौकिके चाहिकण्टकापनयादौ प्रवृत्तिदर्शनात् । क्षेमरूपञ्च साधनत्वं लब्धपरिरक्षणं सिद्धस्योत्तरकालसत्त्वनिर्वाहकत्वम् प्रागभावस्याप्युत्तरोत्तरकालसम्बन्धः प्रतियोग्युत्पादविरोधि-

---

राहित्येन स्थितिसम्भवेऽपि न क्षतिरित्याहुः । प्रयोजकत्वपराण्येवेति । एतेन तत्त्वज्ञानकारणताबोधकवेदान्तिमतदूषणानामव्यसम्भवोऽत्र मते सूचितः ।

दुःखध्वंस एव मुक्तिरिति प्रथमकल्परूपसिद्धान्तमतं दृढीकृत्य दुःखप्रागभाव एव मुक्तिरिति द्वितीयकल्पाक्षिप्तं प्राभाकरमतं निराकर्तुं तद्व्यवस्थापयति यत्त्विति । साध्यः निर्वाह्यः । क्षेमेति । क्षेमसामान्यसाधनमिदमिति ज्ञानं प्रवृत्तिजनकमिति भावः । अहिः सर्पस्तस्यापनयन तज्जन्यारिष्टनिवारणम् कण्टकापनयने तद्बहिःकरणादि इत्यर्थः । प्रवृत्तिदर्शनादिति । तथा च प्रायश्चित्तादिप्रवृत्तेरुद्देश्यत्व नहि दुःखध्वंसे सम्भवति गोवधादिसर्पादिजन्यदुःखस्य तदानीमनुत्पत्तेः। अत्यन्ताभावस्य च नित्यत्वेन स्वत एव सत्तानिर्वाहात् न तत्र पुरुषव्यापारोपयोगः एवञ्च दुःखप्रागभावस्यैव प्रवृत्त्युद्देश्यत्वमिति भावः । प्रतियोग्युत्पादो दुःखोत्पादस्तस्य विरोधिना

निर्वाह्यः। दुःखोत्पादविरोधी च दुःखबीजीभूताधर्मनाशहेतुरात्मतत्त्वज्ञानमेवेति तत्साध्यत्वं दुःखप्रागभावस्येति प्राभाकराणां मतम्।

तदयुक्तम्। निर्विशेषितदुःखप्रागभावस्याप्युत्तरकालसम्बद्धस्य संसारदशासाधारणतया स्वसमानाधिकरणदुःखासमानकालीनदुःखध्वंसविशिष्ट एवासौ मोक्षरूपो वाच्यः। तादृशश्चाप्रसिद्धः मुक्तस्य दुःखानुत्पत्त्या मुक्तिदशायां तत्प्रागभावासत्वात्। अनागतस्यैव प्रागभावप्रतियोगित्वात्। दुःखं मे माभूदित्यादिकामना च उत्तरोत्तरकालसम्बन्धविशिष्टदुःखात्यन्ताभावविषयिण्येव, नित्यत्वेऽपि तस्य प्रागभाववत् साध्यत्वमक्ष-

---

तत्त्वज्ञानेन निर्वाह्यः साध्यः तत्साध्यत्वं तत्प्रयोज्योत्तरकालसम्बन्धकत्वम् इति यावत्।

दूषयति तदयुक्तमिति। अनागतस्यैवेति। जनिष्यमाणस्येत्यर्थः। प्रागभावप्रतियोगित्वादिति। अन्यथा तादृशप्रागभावस्य नित्यत्वेनात्यन्ताभावत्वापत्तिः निःप्रतियोगिकत्वेन चाभावत्वानुपपत्तिश्च स्यादिति भावः। नन्वेवं तर्हि दुःखं मे माभूदिति कामनाया निर्विषयतया प्रेक्षावतां प्रायश्चित्तादौ प्रवृत्तिर्नोत्पद्येतेत्यत आह दुःखं मे माभूदिति। तस्येति। तस्यात्यन्ताभावस्य। अत्रेदं विचार्यते। ननु गगनादाविव सदातनात्यन्ता-

त्तमेव । दुःखप्रागभावाभावविशिष्टदुःखात्यन्ताभावो मोक्षः सुषुप्त्यादिदशायां विशेषणाभावात् नातिप्रस-

---

भावेपि कालसम्बन्धस्य स्वत एव सम्भवात् न तत्र पुरुषव्यापारोपयोग इति कुतस्तस्य क्षेमसाध्यत्वम्? प्रागभावस्य तु प्रतियोगिनाश्यतया प्रतियोग्युत्पत्तेस्तत्र कालसम्बन्धाभावप्रयोजकत्वेन प्रतियोग्युत्पत्तिविरोधिव्यापारस्य च तत्र कालसम्बन्धप्रयोजकत्वं निरपवादमेवेति चेन्न अत्यन्ताभावे सामान्यतः कालसम्बन्धित्वस्य स्वत एव सम्भवेऽपि अधिकरणविशेषावच्छे कालसम्बन्धित्वे पुरुषव्यापारोपयोगस्यावश्यकत्वात्। न चेदमप्रामाणिकम् यथा घटाभावादौ तत्तद्भूतलाव द्यकालसम्बन्धित्वस्य तत्तद्भूतलनिरूपितदैशिकसत्ताप्रयोजकघटानयनविरोधिव्यापारप्रयोज्यत्वम् तादृशका सम्बन्धाभावस्य च घटानयनप्रयोज्यत्वम् तद्वदिहापि दुःखं मे माभूदिति कामनाया दुःखात्यन्ताभावे तत्तत्स्वात्मावच्छेद्यकालसम्बन्धस्यैव विषयत्वेन दुःखोत्पत्तिविरोधिव्यापारप्रयोज्यत्वस्यावश्यकत्वात् अन्यथा सर्वदैव भूतले घटो नास्तीति प्रतीतिप्रसङ्ग इति॥ ननु तथापि आत्यन्तिकं दुःखं मे मा भूदिति मोक्षविषयककामनायाः को विषयः इत्यत्राह दुःखप्रागभावाभावविशिष्टेति। सुषुप्तिकाले तु दुःखप्रागभावसत्त्वाद्विशेषणाभावाद्विशिष्टविरहेण नातिप्रसङ्ग इत्याह सुषुप्तीति। ननु—

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत ।

ङ्ग इति तु सुवचम् । अथ यथा दूरस्थसरोऽवगाहना-दिसाध्यस्य तदुपायपूर्वकत्वादिविशेषणविशिष्टस-न्तापशान्त्यादिरूपफलस्य अनायाससिद्धवृष्ट्यादितो निर्वाहेऽपि विशेष्यसन्तापशान्त्यादिरूपफलस्य वृ-ष्ट्यादितो निर्वाहप्रतिसन्धाने दूरस्थसरोऽवगाहनादौ तज्जन्यश्रमे बलवद्द्वेषान्न प्रवृत्तिः, तथा दुःखनिवृ-त्तिमात्रफलस्य लघूपायतो निर्वाहप्रतिसन्धानेनात्य-न्तिकदुःखनिवृत्तिरूपमोक्षार्थितयाऽपि बहुतरश्रमानु-विद्धयोगाभ्यासादौ प्रवृत्त्यनुपपत्तिरिति चेन्न । यथा

इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ।

इति न्यायेन यत्र विशेष्यस्य लघूपायसाध्यत्वं विशि-ष्टस्य च गुरूपायसाध्यत्वं तत्र बह्वायासरूपोपाये द्वेषोदये-नाल्पायाससाध्ये विशेष्ये एव प्रवृत्तिदर्शनात् बह्वायास-साध्यात्यन्तिकत्वविशिष्टदुःखनिवृत्तिरूपे मोक्षे कथं प्रवृ-त्तिरिति आशयेन दृष्टान्तप्रदर्शनपूर्वकमाक्षिपति अथेति । तदुपायेति। सरोवगाहनरूपो य उपायः स पूर्वो यस्य तत् सरोवगाहनपूर्वकम् तस्य भाव इत्यर्थः। यत्र विशेषणस्या-नुपादेयतया तद्वतो विशिष्टस्यापि नोत्कटेच्छाविषयता तत्रैव तत्प्रयोजके बह्वायाससाध्ये उपाये न प्रवृत्तिः यत्र तु उपादेयविशेषणविशिष्टस्योत्कटेच्छाविषयता तत्र तद्विशिष्टसम्पादकबह्वायासेऽपि प्रवृत्तिर्भवत्येवेति नि-दर्शनप्रदर्शनपूर्वकं समाधत्ते यथेत्यादि । दुःखासम्भि

सुखमात्रस्य लघूपायत्वप्रतिसन्धानेऽपि दुःखासम्भिन्नसुखरूपस्वर्गार्थितया बहुवित्तव्ययायाससाध्ययागादावपि प्रवर्तन्ते दुःखासम्भिन्नत्वरूपविशेषणपुरस्कारेण उत्कटरागसम्भवात् बहुवित्तव्ययायासादौ उत्कटद्वेषानुदयात् तथाऽऽत्यन्तिकत्वरूपविशेषणपुरस्कारेण उत्कटरागस्यानुभविकतया तद्विशिष्टफलार्थितया बहुतरश्रमाऽनुविद्धेऽपि मोक्षोपाये प्रवृत्तिसम्भवात् । उपादेयतानवच्छेदकसरोऽवगाहनपूर्वकत्वादिविशेषणविशिष्टसन्तापशान्त्यादिफले रागोत्कट्यविरहात् उक्तस्थले सरोऽवगाहनादौ प्रवृत्तेरयोगात् ।

---

न्नत्वरूपविशेषणेति । उपादेयदुःखासम्भिन्नत्वादिविशेषणविशिष्टस्य सुखस्योत्कटरागाविषयत्वेन यथा बहुवित्तव्ययायासादौ नोत्कटद्वेषः तथोपादेयाऽऽत्यन्तिकत्वरूपविशेषणविशिष्टस्य दुःखनिवृत्तिरूपमोक्षस्योत्कटरागवत्त्वेन बहुतरश्रमसाध्ये मोक्षोपायभूते योगाभ्यासादावुत्कटद्वेषासम्भवात् प्रवृत्तिरक्षतेति भावः । उपादेयतेति । उपादेयता—इच्छाया अविषयीभूतो योऽभावस्तत्प्रतियोगिता । दूरस्थतयोपादेयतानवच्छेदकीभूतसरोवगाहनपूर्वकत्वविशेषणविशिष्टसन्तापशान्तिफलके उत्कटरागाभावेनोक्तस्थले सरोवगाहनादौ प्रवृत्तेरसम्भवात् दृष्टान्तवैषम्यमिति भावः ।

केचित्तु दुःखध्वंसस्य कारणान्तरादेव सम्भवेन न तस्य तत्त्वज्ञानजन्यत्वमित्यालोच्य दुःखबीजदुरितनाशस्यैवात्यन्तिकस्य मोक्षरूपतां स्वीकुर्वन्ति। तस्यात्यन्तिकत्वं स्वसमानाधिकरणदुरितासमानकालीनत्वमेव। भोगजन्ये प्रायश्चित्तजन्ये च दुरितनाशेऽतिप्रसङ्गभङ्गाय तद्विशेषणोपादानम्। न च तच्छरीरारम्भककर्मणां तत्त्वज्ञाने जातेऽपि भोगादेव क्षयः अत एव तत्त्वज्ञानिनोऽपि नारदादयः सुखोपाये प्रवर्तन्ते दुःखोपाये च निवर्तन्ते, तथा च तत्त्वज्ञानजन्यदुरितनिवृत्तेस्तादृशदुरितसमानकालीनतया नोक्तरूपात्यन्तिकत्वं निर्वह-

---

तत्त्वज्ञानजन्य एव मोक्ष इति केषाञ्चिन्मतमाह केचित्त्विति। कारणान्तरादेव स्वोत्तरोत्पन्नस्वसमानाधिकरणविशेषगुणादेव। तन्मतेऽऽत्यन्तिकत्व निर्वक्ति तस्येति। शङ्कते न चेति। तत्तच्छरीरारम्भककर्मणां स्वभोगनिर्वाहार्थं तत्तच्छरीरप्रयोजकानां तत्तच्छरीरावच्छेद्यभोगोपधायकानां वा कर्मणामित्यर्थः। अत एव तादृशकर्मणां भोगनाश्यत्वादेव। सुखोपाये इत्यादि। अन्यथा तादृशप्रवृत्तिनिवृत्तिभ्यां कल्पयोः सुखदुःखयोरनुपपत्तेः, अदृष्टरूपकारणविरहादिति भावः। तथा च तत्त्वज्ञानजन्यदुरितनिवृत्तेरपि स्व-

तीति वाच्यम् । जातेऽपि तत्त्वज्ञाने भोगादेव प्रारब्धशरीरकर्मसु क्षीणेष्वेव तत्त्वज्ञानान्तरादितरदुरितनाशोपगमात् तस्यैवात्यन्तिकत्वेन मोक्षरूपत्वात् । न च तादृशकर्मसु विद्यमानेष्वेव तत्त्वज्ञानरूपनाशकबलात् कथं नेतरकर्मक्षय इति वाच्यम् । चरमतत्त्वज्ञान एव दुरितनाशकतावच्छेदकजातिविशेषोपगमात् । नच तत्त्वज्ञानादशेषदुरितनाशेऽर्थवशादेव तस्य स्वसमानाधिकरणदुरितासमानकालीनत्वरूपात्यन्तिकत्वनिर्व इति पुरुषान्तरीयदुरितासमानकालीनदुरितध्वंसत्वव-

---

समानाधिकरणेतरदुरितसमानकालीनतयोक्तरूपात्यन्तिकत्वविरहान्नात्यान्तिकदुरितनिवृत्तिरूपमोक्ष इति भावः। समाधत्ते जातेपीति । प्रारब्धशरीरकर्मक्षयान्ते तत्त्वज्ञानान्तरादितरसकलदुरितनिवृत्तेरेव मोक्षरूपत्वान्नात्यन्तिकत्वानिर्वाह इति भावः। चरमतत्त्वज्ञान एवेति । तथा चादृष्टनाशत्वावच्छिन्नं प्रति विजातीयतत्त्वज्ञानत्वेन कार्यकारणभावान्न प्रारब्धकर्मदशायां चरमतत्त्वज्ञानं विनेतरकर्मक्षय इति भावः । स्यादेतत् यथा पुरुषान्तरीयदुरितासमानकालीनदुरितनिवृत्तेर्न मुक्तित्वं तथा तत्त्वज्ञानादशेषदुरितनाशेनार्थतस्तस्य स्वसमानाधिकरणदुरितासमानकालीनरूपात्यन्तिकत्वानिर्वाहेऽपि नोक्तरूपमुक्तित्वस्य तत्त्वज्ञानजन्यतावच्छेदकत्वम् एवं गोवधादिजन्यतावच्छेदकजातिभिः सङ्करात् तत्त्वज्ञान-

न्निरुक्तं मुक्तित्वमपि न तत्त्वज्ञानजन्यतावच्छेदकम्, तत्त्वज्ञाननाश्यतावच्छेदकतया च न दुरितेषु जातिविशेषकल्पनसम्भवः गोवधादिजन्यतावच्छेदकजातिभिः सङ्करप्रसङ्गात्, अविशेषितदुरितनाशत्वेऽपि न तत्त्वज्ञानजन्यतावच्छेदकत्वसम्भवः भोगजन्यादिदुरितनाशे व्यभिचारादिति कथं तादृश्यामपि मुक्तौ तत्त्वज्ञानस्य हेतुतेति वाच्यम्। भोगादिघटितसामग्रीमन्तरेणैव तत्त्वज्ञानेन दुरितनाशात् तत्र तद्धेतुताया आवश्यकत्वे अगत्याऽऽत्यन्तिकत्वविशिष्टस्यैव तद्धर्मस्य तत्त्वज्ञानजन्यतावच्छेदकत्वसिद्धेः।

पुरुषान्तरीयदुरितासमानकालीनत्वविशिष्टस्य दुरितना-

---

नाश्यतावच्छेदिका दुरितनाशनिष्ठात्यन्तिकत्वादिविशेषिता जातिरपि कल्पयितुमशक्या अविशेषितदुरितनाशत्वमपि भोगादिजन्यदुरितनाशे व्यभिचारात् तत्त्वज्ञानजन्यतावच्छेदकं नैव सम्भवतीति कथमुक्तरूपमुक्तौ तत्त्वज्ञानस्य कारणतेत्यभिप्रायेणाशङ्कते नचेति। सङ्करप्रसङ्गादिति। प्रायश्चित्तनाश्ये गोवधजन्यादृष्टे तत्त्वज्ञाननाश्यतावच्छेदकजातेरसत्त्वेन तत्त्वज्ञाननाश्ये ब्रह्मवधजन्यादृष्टे गोवधजन्यतावच्छेदकजातेरसत्त्वेन परस्परव्यभिचाररूपोऽत्र सङ्करो विवक्षित इति ध्येयम्। अगत्या प्रकारान्तरेण व्यभिचारवारणासम्भवेन, तथाच चरमतत्त्वज्ञानाव्यवहितोत्तरजायमानस्वसमानाधिकरण-

शस्य जन्यतावच्छेदकत्वे मानाभाव एव बाधकः ।
अथ दुरितनाशेऽपि तत्त्वज्ञानस्य हेतुत्वमप्रामाणिकं भोगादेव सर्वत्रादृष्टनाशोपगमात् अन्यथा "माभुक्तं क्षीयते कर्म" इत्यादिवचनविरोधः स्यात् । न च तत्त्वज्ञानेन कर्मणोऽविनाशे तत्त्वज्ञानिनामात्यन्तिकदुःखनिवृत्तिः कथं स्यादिति वाच्यम् । प्राचीनकर्मणां भोगादेव क्षयेण वासनाविरहेण निषिद्धाचरणादिनाऽदृष्टान्तराजननात् दुःखानुत्पादेन कतिपयकालोत्तरं आत्यन्तिकदुःखविगमसम्भवात् । अत एव तत्त्वज्ञानेन कर्मणामविनाशे दुःखस्याऽऽवश्यकतया तत्त्वज्ञानोपाये प्रवृत्त्यनुपपत्तिरित्यपि समाहितम् । न च ।

---

दुरितासमानकालीनदुःखनिवृत्तौ तादृशतत्त्वज्ञानस्य कारणत्वान्नोक्तसङ्करव्यभिचाराविति भावः । आत्यन्तिकत्वविशिष्टस्यैवेति । अर्थसमाजग्रस्तस्यापीति भावः । स्यादेवमपि यदि दुरितनाशे तत्त्वज्ञानस्य कारणता स्यात्तदेव नेति युक्त्या शङ्कते अथेति । तत्त्वज्ञानिनां पापरूपकारणसत्त्वाद्दुःखरूपकार्यस्यावार्यत्वात्कथं तेषां मुक्तिः स्यादिति "कथं स्यादित्यादि" ग्रन्थशङ्कातात्पर्यम् । कतिपयकालोत्तरमिति । कालस्येयत्तया परिमातुमशक्यत्वेन प्राचीनकर्मोपभोगार्थं यो यः काल आवश्यकस्तदनन्तरमित्यर्थः । अत एवेति । तत्त्वज्ञानस्य वा-

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परापरे ॥
यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥
इति बहुतरवाक्यबोधितं तत्त्वज्ञानस्य कर्म-

---

स्वनाशद्वाराऽदृष्टानुत्पादेन मुक्तानुपयोगितायाः सत्त्वे-नैवेत्यर्थः । अस्य समाहितामित्यत्रान्वयः । तत्त्वज्ञानस्य साक्षात्कर्मनाशकतामाशङ्कते न चेति । तस्मिन् ब्रह्मणि दृष्टे साक्षात्कृते अस्य परमात्मसाक्षात्कारिणः हृदय-ग्रन्थिः आत्मशरीरयोरभेदसंस्कारः भिद्यते विनश्यति । ईश्वरसाक्षात्कारे जाते तत्सामग्रीनियतसामग्रीजन्यतया जीवात्मसाक्षात्कारो भवत्येवानन्तरं तद्विशिष्टगोचरात्मशरीराद्यभेदसंस्कारो नश्यतीति हृदयम् । सर्वसंशयाश्छिद्यन्ते इति । ईश्वरसाक्षात्कारे सति योगज धर्मबलेन दोषविरहात् निखिलपदार्थानां यथार्थ एव साक्षात्कारो जायते ततः संशयो भवतु नैवार्हति तस्यैककोटेः भ्रमत्वनियमात् इति भावः । कर्माणि सञ्चितादृष्टानि क्षीयन्ते नश्यन्तीत्यर्थः । नाशकान्तरविरहेण परमात्मसाक्षात्कारेणैवादृष्टनाश इति । एतच्च कर्मकर्तृ प्रत्ययान्तम् आयुः परं क्षीयते इतिवत् । यथाग्नेरिन्धन-संयोगे कायव्यूहान्तरद्वारा परम्परया नाशे भस्मनि च कारणता तथा तत्त्वज्ञानस्यापि परम्परयैव कर्मनाशक-

नाशकत्वं दुष्परिहरमेवेति वाच्यम् । माभुक्त-मित्यादिवचनविरोधानुरोधेन तत्त्वज्ञानं कायव्यूहसम्पादनद्वारा झटिति सकलकर्मभोगं निर्वाह्य तानि नाशयतीत्यत्रैव ज्ञानस्य कर्मनाशकताबोधकवाक्यानां तात्पर्योपगमात् । यथाग्नेरिन्धननाशे भस्मनि च परम्परयैव हेतुता तथा ज्ञानस्यापि कर्मविनाश इत्येतत्सूचनायैव ज्ञानस्याग्नित्वेन निरूपणम् । न च माभुक्तमित्यादिवाक्ये कर्मपदं लक्षणयैवाऽदृष्टार्थकमुपगन्तव्यम् तस्य क्रियायामेव शक्तेरिति लक्षणाया आवश्यकत्वे ज्ञानाद्यनाश्यादृष्ट एव सास्तु तत एव विरोधभङ्गे किमर्थं तत्त्वज्ञानिनां सकलकर्मभोगकल्पनमिति वाच्यम् । अदृष्टेऽपि कर्मपदस्यानादिप्रयोगप-

---

तेत्यभिप्रायेण समाधत्ते माभुक्तमित्यादिना । तत्त्वज्ञानं परम्परया कर्मनाशकमित्यादितात्पर्यं न केवलमस्मदादीनां किन्तु अग्निपदेन सूचितम् इत्याह यथाऽग्नेरिति । परम्परयैव हेतुतेति । अग्निना इन्धनारम्भकावयवेष्वभिघातः ततस्तेषु क्रिया तत आरम्भकसंयोगनाशस्ततोऽवयविरूपेन्धननाश इत्यादिपरम्परयेत्यर्थः । अग्नित्वेन निरूपणम् तत्सदृशत्वेन कथनम् । ननु अदृष्टे कर्मपदस्याशक्तत्वाल्लक्षणया तद्बोधस्वीकारापेक्षया विशिष्टादृष्ट एव साङ्गीक्रियतामित्याशयेनाक्षिपति न चेति ।

वाहदर्शनात्तत्र सामान्यरूपेण लक्षणायाः शक्तितुल्यत्वात् कल्पनालाघवानुरोधेन विशेषरूपेण स्वारसिकलक्षणाया अयुक्तत्वात् । नचैतन्मते कर्मणां भोगस्याऽऽवश्यकतया अभुक्तकर्माप्रसिद्ध्या तादृशवाक्यस्य यथाश्रुतार्थपरता न सम्भवतीति वाच्यम् । अतीतत्वस्य क्तप्रत्ययेन विवक्षणात् तत्क्षयापेक्षया अतीतो यो भोगस्तदनुपहितकर्माणि तत्क्षयप्रतियोगित्वनिषेधरूपयथा-

---

लक्षणाया निरूढलक्षणायाः । स्वारसिकलक्षणाया इति । आधुनिकलक्षणाया इत्यर्थः । अयुक्तत्वात् असङ्गतत्वात् अन्यथा बहूनां विधिनिषेधवाक्यानां एकार्थत्वम्—बहुकालावच्छिन्नस्वर्गादिबोधकानां वाक्यानामल्पकालावच्छिन्नस्वर्गादिबोधकत्वं स्यादिति भावः । एतन्मते भोगस्य कर्मनाशकतामते । तादृशवाक्यस्य माभुक्तमित्यादिवाक्यस्य । यथाश्रुतार्थपरता भोगेनैव साक्षात्कर्मणो नाशकताऽनुपभुक्तकर्मस्थलेऽप्रसिद्धेत्यर्थः । तत्क्षयापेक्षयेत्यादि । भोगप्रयोज्यो यो वर्तमानः कर्मक्षयः तदपेक्षयेति भावः । तादृशभोगानुपहितत्व तादृशभोगजनकत्वे सति अव्यवहितपूर्वत्वं यत् तच्छून्यत्वम् । तच्च भुज्यमानभोक्ष्यमाणकर्मस्वपि, तेषु वर्तमानक्षयप्रतियोगित्वं नास्तीति भावः । इदमत्र विचार्यते । तत्क्षयेत्यत्र तत्पदेन किं बोध्यते ? वर्तमानोऽर्थ इति चेत् तत्तादृशश्रुत्यात्मकप्रयोगाधिकरणसमयवृत्तित्वं सामान्य-

तः प्रयोगाधिकरणसमयवृत्तित्वं वा ? आद्ये तादृशश्रुति प्रयोगोत्तरकाले तत्त्वज्ञानेन कर्मणां नाशेपि तादृशप्रयोगाधिकरणकालीनक्षयप्रतियोगित्वाभावसत्त्वेन तादृशार्थाबाधात् विवक्षितार्थासिद्धेः । द्वितीये तु सामान्यतः प्रयोगाधिकरणत्वस्यैव कालमात्रे सत्त्वेन तद्वृत्तिक्षयापेक्षया अतीतभोगोपहितत्वस्यैव सकलकर्मवृत्तितया तत्र तदनुपहितत्वाप्रसिद्धेः । नच तत्क्षयापेक्षया अतीतभोगानुपहितत्वं क्षयविशिष्टान्यत्वम् वैशिष्ट्यञ्च स्वाधिकरणकालवृत्तिध्वंसप्रतियोगिवृत्तिभोगोपहितत्वसम्बन्धेनेति वाच्यम् । सर्वेषां कर्मणां प्रत्येकं स्वोत्तरकालीनक्षयापेक्षयाऽतीतभोगोपहितत्वस्यैव सत्त्वेन क्षयविशिष्टतया तदसम्भवात् इति चेदत्र नव्याः । स्वनिरूपकक्षयप्रयोजकभोगोपहितत्वसम्बन्धावच्छिन्नस्वाभाववत्त्वमेवातीतभोगानुपहितत्वम् । स्वपदं क्षयप्रतियोगित्वपरम् । स्वाभाववत्त्वं च स्वनिरूपकक्षयप्रयोजकभोगानुपहितत्वस्वरूपोभयसम्बन्धेन । एवञ्च भोगं प्रति तत्त्वज्ञानादिना कर्मणां नाशस्वीकारे तत्प्रतियोगित्वस्य तादृशभोगोपपहितत्वसम्बन्धाप्रसिद्ध्या तादृशसम्बन्धेन तादृशप्रतियोगित्वाभावस्य केवलान्वयितया तादृशभावस्वरूपोभयसम्बन्धेन तत्प्रतियोगित्वस्य तादृशकर्मणि सत्त्वात् बाधापत्तेरिति । कल्पकोटिशतैरपीत्यनेनाभुक्तकर्मणः कालमात्रप्रयोज्यनाशप्रतियोगित्वनिषेध एव प्राप्यते कारणसामान्यप्रयोज्यनाशप्रतियोगित्वनिषेधे कैरपीत्येव वक्तव्यं स्यादित्यभिप्रायेण समाधत्ते

श्रुतार्थेऽप्रसिद्ध्यनवकाशात् । यद्यपि भोगोऽनुभवविशेषः तद्विषयत्वरूपं भुक्तत्वं न कुत्राप्यदृष्टे, तथापि भोगविषयफलोपधानमेव भोगकर्मत्वं प्रकृते विवक्षितम्। सुखं भुज्यते इतिवत्पुण्यं भुज्यते इत्यादिप्रयोगदर्शनात् तादृशार्थस्यापि स्वरसप्रसिद्धत्वादिति चेन्न। कल्पकोटिशतैरपि इत्यन्तेन यथा भावनाख्यसंस्कारः कालवशादपि फलमनुत्पाद्य नश्यति तथा न कर्म इत्येव लभ्यते तथा च ज्ञानादपि कर्मणो नाशे न कश्चिद्विरोधः अन्यथा प्रायश्चित्तादपि कर्मनाशेन तादृशवचनविरोधपरीहारासम्भवात् प्रायश्चित्तस्य पापानाशकत्वे तत्र प्रवृत्त्यनुपपत्तिः। न च प्रायश्चित्तस्यापि कायव्यूहाधीनझटितिभोगसम्पादनद्वारा पापनाशकत्वमिति तत्र प्रवृत्तिरुपपद्यत एवेति वाच्यम्। दुःखव्यक्तीनां साम्ये झटितिभोगविलम्बभोगयोरविशेषेण प्रायश्चित्तानर्थक्यात्। एवञ्चावश्यमेव भोक्त-

---

कल्पकोटिशतैरपीत्यादि। तादृशार्थकरणे दोषमाहान्यथेति। अन्यथा कारणान्तरादपि नाश्यतानिषेधे इत्यर्थः। प्रायश्चित्तानर्थक्यादिति। इदमत्र तात्पर्यम्—महापातकादिजन्यनरकरूपयावद्दुःखभोगव्यक्तीनामेककालीनोत्पत्तये यदि प्रायश्चित्तं कर्तव्यम्, तच्च गोमयभक्ष-

व्यमित्यस्याविरोधाय ज्ञानिनामपि सकलकर्मभोगोपगम इत्यपि न युक्तम् कृतप्रायश्चित्तानां कर्मणां भोगाभावात्तत्र कर्मपदस्य वेदबोधितनाशकानाश्यकर्मपरतायाः आवश्यकत्वात् । तत्त्वज्ञानरूपनाशकस्यापि वेदबोधिततया तेन भोगं विनैव कर्मनाशे क्षतिविरहात् । तत्त्वज्ञानस्य साक्षाददृष्टनाशकत्वे क्वचिद्भोगः क्वचिच्च तत्त्वज्ञानम् इत्यननुगमेन व्यभिचाराद्भोगस्यादृष्टनाशकारणता न सम्भवतीत्यपि नाशङ्कनीयम् । भोगोपहितादृष्टनाशत्वस्य भोगजन्यतावच्छेदकतया व्यभिचारानवकाशात्, अन्यथा तत्रापि प्रायश्चित्तकीर्तनादिजन्यादृष्टनाशे व्यभिचारात् । अथ दुरितनाशस्य सुखदुःखाभावाभिन्नतया तद्रूपस्य कथं स्वतः प्रयोजनत्वमिति चेन्न कथञ्चित् स्वतः

---

णादितो दिनयापनादिघटितद्वादशाब्दादिरूपम् तदा तत्र कस्यापि प्रवृत्त्यनुपपत्त्या प्रायश्चित्तविधेर्वैफल्यापत्तिः । यतो न कश्चित् रत्नप्राप्त्यर्थमर्णवे मज्जति । ननु कल्पकोटीत्यादिना कर्ममात्रस्य भोगमात्रनाश्यताऽलाभेपि अवश्यमेवेत्यादेः कर्ममात्रस्य भोगविषयत्वविधायकत्वेनार्थतो भोगं विना कर्मणोऽनाश्यत्वलाभाद्विरोध इत्यत आह एवञ्चेति । प्रायश्चित्तप्रवृत्त्यन्यथानुपपत्तौ चेत्यर्थः । वेदबोधितं नाशकत्वञ्च कर्मनाशकत्वेन

प्रयोजनत्वम्, किन्तु दुःखाभावनिर्वाहकतया गौण-प्रयोजनत्वमेव । अथैवं मिथ्याधीजन्यवासनाया अदृष्टद्वारा दुःखप्रयोजकतया तन्निवृत्तेरपि दुःखाभाव-निर्वाहकतया पुरुषार्थत्वेन तस्या एव कुतो न मोक्ष-रूपतोपेयत इति चेन्न । उत्पन्नतत्त्वज्ञानानां वासनानि-वृत्तावपि यावत् प्रारब्धशरीराणां कर्मणां नोच्छेद-स्तावदपवर्गानभ्युपगमात् । तावदेवास्य चिरं यावन्न विमोक्षः अथ सम्पत्स्यते कैवल्येनेति श्रुत्यापि प्रारब्ध-कर्मविमोक्षपर्यन्तं ज्ञानिनः कैवल्यविलम्बबोधना-दित्याहुः ।

---

वेदप्रतिपाद्यत्वम्,तच्च क्षीयन्ते चास्य कर्माणि इत्यादिरू-पम् । भोगस्य तु नाशकत्वेन वेदबोध्यत्वं नास्ति । तद्रू-पस्य दुरितनाशरूपस्य । शङ्कते अथैवमिति । एवं गौणप्र-योजनस्य मुक्तित्वे । तावदेवेति । अस्य उत्पन्नतत्त्वज्ञानस्य । विमोक्षः कर्मनाशः चिरं विलम्बः कैवल्यप्रागभाव इत्यर्थः । अथ प्रारब्धकर्मनाशानन्तरमित्यर्थः । आहुरित्यस्वरस-सूचनाय तद्बीजञ्च गौणप्रयोजने मुक्तित्वस्यानुभवविरो-धात् तदत्यन्तविमोक्षोऽपवर्ग इति न्यायसूत्रादिवि-रोधाच्च तत्र तच्छब्देन दुःखस्यैव प्रक्रान्तत्वेन पराम-र्शात् इति ।

एकदण्डिनो वेदान्तिनस्तु यदुपाध्यनवच्छिन्नस्य ब्रह्मणो विशुद्धरूपता तादृश उपाधिविगम एव कैवल्यम् । तादृशोपाधिरविद्यैवेति तन्निवृत्तिरेव तत् । दुःखस्यान्तःकरणविशेषबुद्धिधर्मतया तस्याश्च स्वजन-

---

वेदान्तिमतमुत्थापयति एकदण्डिन (१) इत्यादिना । ब्रह्मणोऽविशुद्धरूपता कामचारित्वाद्यभिमानरूपमालिन्यराहित्यम् । उपाधिरिति । वेदान्तिमते अविद्यापरिणामविशेषोऽन्तःकरणं तदवच्छिन्नात्मैव जीव इत्युच्यते शुभ्रस्फाटिकस्य जपाकुसुमसान्निध्येन लौहित्यमिव कर्तृत्वादिधर्मरहितेऽप्यात्मनि अन्तःकरणसम्बन्धादेव कर्तृत्वभोक्तृत्व(२)प्रतीति । तन्निवृत्तिरविद्याध्वंसः । तत्कैवल्यं स एव मोक्षः । तदुक्तम् ।

अविद्यास्तमयो मोक्ष सा च बन्ध उदाहृतः । इति ।

दुःखस्येति । एकदण्डिमतसिद्धमनोबुद्ध्यहङ्कारचित्ताख्यचतुर्विधान्तःकरणमध्ये निश्चयवृत्तिकबुद्ध्यन्तःकरणधर्मतया तन्मते दुःखादेर्मनोगतत्वात नात्मगुणत्वम् आत्मनो निर्धर्मत्वात् "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरेतत् सर्वं मन

---

(१) शिखासूत्रयुक्तत्वायुक्तत्वाभ्यामेकदण्डित्रिदण्डिमतयोर्भेद इति केचित् ।

(२) अत एवोपाधिशब्दो उप समीपवर्तिनि स्वधर्मं लौहित्यादिकं आदधाति आरोपयतीति जपाकुसुमान्तःकरणादिकं बोधयति ।

काविद्यानाशनाश्यतयाऽविद्यानिवृत्तेः स्वतःप्रयोजन त्वविरहेऽपि दुःखनिवृत्तिनिदानतया गौणप्रयोजनत्वं दुरपवादमेव अविद्या च पदार्थान्तरमजन्यमपि विनाशप्रतियोगि, तन्नाशकं च ब्रह्मसंवेदनम् । नचाविद्यारूपावरणसत्त्वे ब्रह्मसंवेदनमेव दुर्घटमिति वाच्यम् । ब्रह्मसंवेदनं हि ब्रह्माकारान्तःकरणवृत्तिः वृत्त्याख्योऽन्तःकरणपरिणाम एव विषयावरणभूताविद्यानिवृत्तिफलकः । तदुक्तम् ।

---

एवेति" श्रुतेः । नन्वविद्याया विद्येतरपदार्थत्वे घटादिनिवृत्तिरपि मोक्षः स्यात् अत आह अविद्येति । सदसद्भ्यामनिर्वचनीय त्रिगुणात्मकं विचित्रप्रपञ्चभासकमविद्याभिधं पदार्थान्तरं प्रपञ्चभानान्यथाऽनुपपत्त्या कल्पनीयमित्यर्थः । तदिति । तमोनाशक आलोक इव अविद्यानाशकं ब्रह्मसंवेदनमिति भावः । ब्रह्मस्फूर्तिरेव ब्रह्मसंवेदनमित्याशयेनाशङ्कते न चेति । ब्रह्मसवेदनं हीति । तथा चाविद्यायाः स्फूर्तिप्रतिबन्धकत्वम् नत्वन्तःकरणवृत्तिप्रतिबन्धकत्वमिति भावः । बुद्धिवृत्तीत्यादि । बुद्धिरन्तःकरणविशेषः तस्य वृत्तिर्विषयाकारः परिणामः । चिदाभासः प्रतिबिम्बितचैतन्यम् । द्वावपीमौ घट व्याप्नुतः सम्बध्नीतः । तत्र घटादावावरणीभूतमज्ञानं घटो नास्तीत्याकारकं धियाऽन्तःकरणवृत्त्या न इयेत् तत्तान्निष्ठाज्ञाननाशं प्रति तत्तद्विषयाकारान्तःक-

बुद्धिवृत्तिचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासाच्च तु घटः स्फुरेत् ॥

एवञ्चाविद्याया अन्तःकरणवृत्तौ न विरोधिता अपि तु विषयस्फूर्तावेव । स्फूर्तिश्च प्रकटता सा च भट्टानामिव पदार्थान्तरमेवेति । नच ब्रह्मणोऽन्तःकरणवृत्तिविषयत्वे ब्रह्मणः स्वप्रकाशचैतन्यरूपतासिद्धान्तविरोधः स्वेनैव प्रकाशोऽवगाहनं यस्येति व्युत्पत्त्या स्वमात्रविषयस्यैव स्वप्रकाशशब्दार्थत्वादिति वाच्यम् । यस्य स्वत एव स्फूर्तिस्तस्यैव स्वप्रका-

---

रणवृत्तेः कारणत्वात् । आभासात् प्रतिबिम्बितचित्सम्बन्धात् स्फुरेत् आवरणाभावेन स्वाकारावच्छिन्नचिदभेदेन प्रकाशेतेत्यर्थः । तथाचैतन्मते चितेर्नित्यत्वेऽपि तत्स्फूर्तेरावरणनाशप्रयोज्यतया तन्नाशे घटः स्फुरतीति तदनाशे च घटो न स्फुरतीत्यादिव्यवहारोपपत्तिरिति तात्पर्यम् । पदार्थान्तरमेवेति । अन्यथा विषये चित्सम्बन्धस्य स्फूर्तिपदार्थतया तस्य चित्स्वरूपत्वे चितो नित्यत्वेन सदैव स्फूर्तिः स्यात् विषयस्वरूपत्वे च विषयकाले सदा स्फूर्त्यापत्तिर्दुर्वारा स्यात् इत्यर्थः । अन्तःकरणवृत्तिविषयत्वे अन्तःकरणवृत्तिनिरूपकाविषयत्वे । स्वेनेत्यत्र तृतीयार्थो निरूपकत्वम् अवगाहनञ्च विषयत्वम् यस्येति षष्ठ्यर्थः कर्मत्वम् तथाच स्वमात्रनिरूपकं ब्रह्मनिष्ठं विषयत्वमितिव्युत्पत्त्या स्वमात्रवि-

शत्वात् ।  जडात्मकस्य प्रपञ्चस्य स्फूर्तिर्न स्वत एव किन्तु फलात् । वृत्तिव्याप्यविषये चित्प्रतिबिम्ब एव पारिभाषिकं फलम् । तदुक्तम् ।

मोहातीतो विशुद्धो मुनिभिरभिहितो मोहसंक्रान्तमूर्तिः
साक्षी स्वान्ते तदुत्थे प्रतिफलितवपुर्गीयतेऽसौ प्रमाता ॥
वृत्त्यारूढः प्रमाणं फलमपि धिषणावृत्तिसंव्याप्तचैत्यो-
पाधिर्मोहोत्थशब्दप्रमुखविषयगः स्यात्प्रमेयः परात्मा ॥

---

षयत्वस्य प्रकाशशब्दार्थत्वादिति भावः । स्वप्रकाश-शब्दस्य स्वस्मात् प्रकाशो विषयत्वं यस्येति व्युत्पत्त्या स्वमात्रप्रयोज्यविषयताकार्थत्वात् नानुपपत्तिरित्याश-येन समाधत्ते यस्येति । द्रव्यचाक्षुषं प्रति संयोगेना-लोकस्य हेतुत्वेऽपि आलोकस्यालोकादेव चाक्षुषज्ञान-वत् ब्रह्मणः स्फूर्तिर्ब्रह्मण एव भवतीति भावः। घटादीनां तु न स्वप्रकाशत्वमित्याह जडात्मकेति । वृत्तिव्याप्य-विषयेऽन्तःकरणवृत्त्यवच्छिन्नविषये ।। चित्प्रतिबिम्ब एव प्रतिबिम्बितचैतन्यमेवेत्यर्थः । तत्र प्रमाणमाह तदु-क्तमिति । शारीरकाचार्येणेति शेषः । मोहातीत इति । सर्वत्र परात्मेति विशेष्यम् । मोहेनाविद्ययाऽतीतः शून्यः सन् परात्मा विशुद्धोऽभिहितः ब्रह्मेति कथितः । मोहे-ऽज्ञाने सक्रान्ता मूर्त्तिः स्वरूपं यस्य स तादृशस्सन् सा-क्षी सर्वप्रपञ्चभासक ईश्वरः । तदुत्थे मोहोत्थे स्वान्ते-ऽन्तःकरणे प्रतिफलितवपुः संक्रान्तस्वरूपः अन्तःकरणा-वच्छिन्न इति यावत् एवम्भूतः परात्मा प्रमातेति गीयते।

इति । ब्रह्मणश्च स्फूर्तिः स्वत एव न तु चिदाभासात् चैतन्यवस्तुनि चैतन्यप्रतिबिम्बासम्भवात् । एतेन ब्रह्मसंवेदनं ब्रह्मज्ञानम् एवं च स्वविषयज्ञानरूपं ब्रह्मैव तथेति नित्यतया संसारदशायामपि तत्सत्त्वेनाऽविद्यानिवृत्तिप्रसङ्ग इति परास्तम् । अन्तःकरणवृत्तिरूपब्रह्मसंवेदनस्यैवाविद्यानिवर्तकतया ब्रह्माकारवृत्तेः संसारदशायामसत्त्वेनाविद्यानिवृत्तिप्रसङ्गाप्रसक्तेः ॥

त्रिदण्डिनस्तु आनन्दमयपरमात्मनि जीवात्मनो लयो मोक्षः । परमात्मजीवात्मनोरभेदेऽपि उपाधिविशेषविशिष्टस्यात्मनो जीवत्वम् तस्यैवौपाधिकः परमात्म

---

स एव च जीवः वृत्त्याऽन्तःकरणपरिणामेन रूढः अवच्छिन्नश्चेत् प्रमाणं मीयते । धिषणावृत्तिमध्यासे बुद्धिवृत्तिपरिच्छिन्नविषये चैत्योपाधिः चित्प्रतिबिम्ब यस्य स तादृशविषयावच्छिन्न इति यावत् फलं प्रमितिरिति । वृत्तिं विनाऽज्ञानजन्यघटादिशब्दपरिच्छिन्नस्तु प्रमेय इति परात्मा मीयते इत्यर्थः । प्रतिबिम्बासम्भवात् वस्तुनः प्रतिबिम्बस्य भिन्नवस्तुन्येव संभवात् इति भावः । एतेन ब्रह्मसंवेदनस्यान्तःकरणवृत्तित्वार्थकत्वेन ॥

त्रिदण्डिनस्त्विति । मायावशाद्ब्रह्मैव परिणमति इति शाङ्करीयास्त्रिदण्डिनः । आनन्दमय आनन्दात्मक इत्यर्थः । प्रचुरार्थे मयडित्यपि केचित् । तस्यैवेति ।

भेद इति भेदकोपाधिविरह एव जीवस्य परमात्मनि यथा घटाकाशस्य घटविगम एव शुद्धाकाशस्य लयः, लिङ्गशरीरावच्छिन्नस्यैवात्मनो जीवभाव इति लिङ्गशरीरनाश एव पर्यवसितो मोक्षः । लिङ्गशरीरं च स्थूलशरीरबीजभूतमहदहङ्कारतन्मात्राख्यभूतसू-

---

जीवस्यैव षष्ठ्यर्थः प्रतियोगित्वम् । औपाधिकः लिङ्ग-शरीररूपोपाधिवैशिष्ट्यावच्छिन्नप्रतियोगिताकः पर-मात्मभेदः परमात्मनि भेद इत्यर्थः । स्यादेतत् लि-ङ्गशरीरविशिष्टात्मनो जीवत्वेऽपि तस्य नित्यत्वेन कुतो लय इत्यत आह भेदकोपाधिविरह इति। उपाधिनाश एव जीवस्य परमात्मनि घटापगमे तदाकाशस्य शुद्धाका-श इव लय इत्यन्वय. । नन्वेतन्मते क उपाधिरविद्या चेदेकदण्डिमताभेद इत्यत आह लिङ्गशरीरावच्छिन्नस्ये-ति । एतन्मते उपाधिर्वस्तुभूत एव अयं घट इत्यादिव्य-वहारं प्रति अविद्यापरिणामस्य विषयस्यैव कारणत्वात्। पूर्वमते तु उपाधिर्न वास्तवोऽवास्तवत्वं च सर्वकाल-वृत्त्यभावप्रतियोगित्वे सति तत्त्वेन प्रतीयमानत्वम् । तथाच तादृशव्यवहारं प्रति न विषयस्य कारणत्वं त-स्यासत्त्वात् किन्तु तत्तदाकारानादिसंस्कारस्येति मत-वैमत्यम् । स्थूलशरीरबीजभूतं स्थूलशरीराधिष्ठानका-रणम् । न्यायमते आत्मैव शरीराधिष्ठानम् एतन्मते तु लिङ्गशरीरावच्छिन्न आत्मेति विशेषः । महदिति । तन्मा-

क्ष्मैकादशेन्द्रियसमुदायः। तद्विशिष्टस्यैवात्मनो दुःखादिमत्तया विशेषणीभूतलिङ्गशरीरस्यैव नाशे दुःखादिकं नोत्पत्तुमर्हति। विशेषणमत्रावच्छेदकत्वाख्यसम्बन्धविशेषवत् आश्रयान्तर्भूतं, तन्मात्रं वा आश्रयः सर्वथैव तस्य दुःखहेतुत्वात्। एवं च तद्विगमस्य दुःखनिवृत्तिहेतुतया पुरुषार्थत्वमक्षतमेवेति। एवमपि

---

त्राख्या शब्दस्पर्शरूपरसगन्धाः। भूतानि आकाशवाय्वग्निजलपृथिव्यः। सूक्ष्माणि एकादशेन्द्रियाणि श्रोत्रत्वक्चक्षूरसनघ्राणवाक्पाणिपादपायूपस्थमनांसि। नाशे इति। सुखदुःखादिकं प्रति लिङ्गदेहाविशिष्टस्य हेतुतया तन्नाशे दुःखादिकं शुद्धात्मनि नैवोत्पद्यते कर्णशष्कुलीविगमे शुद्धाकाशे श्रावणप्रत्यक्षमिवेत्यर्थः। (न्यायमते शरीरात्मनोर्विजातीयसंयोगवत् दुःखाद्युत्पत्तिप्रयोजकसूक्ष्मशरीरात्मनोरवच्छेदकताख्यः कश्चित्सम्बन्धविशेषो वेदान्तिमतेऽङ्गीक्रियते) तद्वत् तद्विशिष्टमित्यर्थः। आश्रयान्तर्भूत दुःखादेराश्रयैकदेशो विशिष्टस्याधिकरणत्वे विशेषणमपि तादृशसम्बन्धाधिकरणमिति भावः। ननु द्वयोरपि दुःखाश्रयत्वे "एतत्सर्वं मन एवेति" श्रुतिविरोधो गौरवञ्च स्यादत आह तन्मात्रं वेति। लिङ्गशरीरमात्रं वेत्यर्थः। सर्वथैवाश्रयत्वेनाश्रयान्तर्भूतत्वेन चेत्यर्थः। एवञ्च दुःखं प्रति लिङ्गशरीरस्य कारणत्वादेव, लिङ्गशरीररूपोपाधिविगमस्य दुःख-

मायाधीनस्य प्रपञ्चस्य मायानिवृत्त्यैव निवृत्तेर्माया-निवृत्तेर्मोक्षदशायामावश्यकत्वम् । अविद्यैव माया-त्वेनैतन्मते परिभाषितेति फलतो न विशेषः ।

---

ध्वंसहेतुतया पुरुषार्थत्वं पुरुषप्रवृत्त्युद्देश्यत्वमक्षतमे-वेत्यर्थः । मतद्वयेऽविशेषं दर्शयति एवमपीति । लिङ्गशरीरस्य दुःखनिवृत्तिहेतुत्वेऽपि । आवश्यकत्व-मिति । तथा च ब्रह्मसंवेदनजन्यमायानिवृत्त्यैव प्रपञ्च-निवृत्तिरिति भावः । एतेन सूक्ष्मशरीरानवृत्त्या दुःख-निवृत्तावपि तत्कारणमायासत्त्वाऽनिवृत्त्या कथं मोक्ष इति परास्तम् ।

मानाभावात् प्रत्यक्षादिप्रमाणविरहादित्यर्थः । इ-न्द्रियसन्निकर्षरूपकारणाभावान्न प्रत्यक्षम् केनापि चक्षुषाऽविषयीकृतत्वात् । नापि जगत् मायोपादानक मिथ्यात्वादिन्द्रजालिकघटादिवदित्यनुमानम् प्रमाणं मिथ्यात्व(१)स्यैवासिद्धेः । न चै"कमेवाद्वितीयं नेह नानास्ति किञ्चनेत्यादय" आगमा एवात्र प्रमाणम् तेषा मीश्वरस्य स्वसजातीयविजातीयराहित्यपरत्वात् । एवं

---

(१) ननु जगन्मिथ्या ब्रह्मातिरिक्तत्वादित्यनुमा-नेन मिथ्यात्वसिद्धः कथ नानुमानं प्रमाणमिति चेन्नाप्र-योजकत्वादन्यथा जगत् सत् कालनिष्ठाभावाप्रतियो-गित्वे सति ब्रह्मातिरिक्तत्वात् इत्यनुमानमृतत्वमेव किन्न बोधयेत् ।

अत्र न्यायविदः अविद्या न पदार्थान्तरम् मानाभा-वात् किन्त्वदृष्टमेव तत्त्वज्ञानरूपविद्याविरोधितयाऽविद्ये त्युच्यते । अदृष्टव्यक्तीनां सादित्वेऽपि तत्प्रवाहस्याना-दितया अविद्याया अनादिताप्रवादः तथा च तन्निवृ-त्तिस्तदधीनदुःखनिवृत्तिर्वा मोक्ष इति निष्पत्त्यूहमेव ।

यत्त्वविद्यानिवृत्त्या बुद्ध्यादिनिवृत्तौ तद्धर्मस्य दुःखस्य निवृत्तिरिति तदपि न युक्तिपथमारोहति बुद्धेः सुखदुःखाद्याश्रयत्वे तस्या विनाशे मानाभावात् । न च दुःखात्यन्तोच्छेदानुरोधात्तन्नाशोपगमः तत्सत्त्वे-ऽप्यदृष्टोच्छेदादेव दुःखप्रवाहविच्छेदसम्भवात् । न चा-श्रयनाशं विना अशेषादृष्टनाश एवानुपपन्नः आश्रय-सत्त्वेऽपि समानाधिकरणतत्त्वज्ञानादेवाशेषादृष्टनाशसम्भ वात् । भवन्मतेप्यविद्यानाशे तद्धेतुताया आवश्यक-त्वात् । पुनरदृष्टानुत्पत्तिश्च वासनादिविरहात् योगि-नां बुद्ध्यादिसत्त्वेऽप्यदृष्टोत्पत्त्या भवन्मतेप्यदृष्टस्य वास-नाहेतुकत्वात् ।

---

तर्ह्यविद्याशब्दस्य अनादिः प्रयोगो व्यर्थः स्यादत आह किन्त्विति । विद्यायास्तत्त्वज्ञानस्योत्पत्तौ दुरदृष्टस्य प्रतिबन्धकत्वेन विद्याविरोधितार्थकतयाऽविद्यापदं व्या-चष्टे विद्याविरोधितयेति ।

अथाविद्याया पदार्थान्तरत्वे चेद्विशेषस्तदा माभूत्तस्यास्तथात्वम् । अदृष्टं मिथ्याज्ञानाहिता वासनैव वा भवत्वविद्या । तत्त्वज्ञानन्त्वदृष्टनाशे न साक्षाद्धेतुरपि तु बुद्धिनाश एव । बुद्धेर्ज्ञानाद्याश्रयतया तत्त्वज्ञानस्याश्रयतारूपसाक्षात्सम्बन्धस्य नाशकतावच्छेदकतया लाघवात् अदृष्टे सामानाधिकरण्यरूपपरम्परासम्बन्धेनैव तत्त्वज्ञानसत्त्वात् तस्य तन्नाशकत्वे नाशकतावच्छेदकप्रत्यासत्ति

---

आश्रयविनाशेनाश्रितनाश इति मतेनाशङ्क्य समाधत्ते यत्त्वित्यादिना । वासनाहेतुकत्वात् इति । तथा चाविद्यानाश प्रति तत्त्वज्ञानस्य हेतुत्वमुपेत्य परम्परया दुःखनिवृत्तिकल्पनामपेक्ष्य साक्षात्तत्त्वज्ञानस्य धर्माधर्मरूपादृष्टनाशम्प्रति हेतुत्वकल्पनमुचितमिति भावः ।

शङ्कते अथेति । तथात्वं पदार्थान्तरत्वम् अविद्याया माभूदित्यन्वयः । अदृष्टस्य विद्याविरोधित्वं कथमतः कल्पान्तरमाह मिथ्याज्ञानेति । तदभाववति तत्प्रकारकत्वरूपमिथ्याज्ञानजन्यवासनाया विद्यया तद्वति तत्प्रकारकत्वरूपया विरोधः सुलभः अदृष्टस्य तु विद्यासत्त्वेपि सत्त्वान्न विरोध इति भावः । न साक्षाद्धेतुरिति । न साक्षात्सम्बन्धेन हेतुरित्यर्थः । तस्य तत्त्वज्ञानस्य, तन्नाशकत्वेऽदृष्टनाशकत्वे । न चेति । प्रतियोगितासम्बन्धेनादृष्टनाशत्वावच्छिन्नम्प्रति तत्त्वज्ञानत्वेन कारणतायां गौरवाद्

गौरवात् । न च प्रतियोगिनिष्ठप्रत्यासत्त्या ज्ञानस्याऽदृष्टनाशकत्वोपगम एव गौरवात् नाशाधिकरणनिष्ठसाक्षात्सम्बन्धेनैव तस्य तन्नाशं प्रति हेतुत्वमुपगन्तव्यमिति वाच्यम् तथासति नियामकाभावेनातिप्रसङ्गापातात् । एवं वासनानाशे तत्त्वज्ञानस्य पृथक्कारणताकल्पनेनापि न्यायमते गौरवम् । तन्नाशादेवादृष्टनाशवत् वासनानाशोपपत्तेस्तत्त्वज्ञानस्य पृथक्कारणतानुपगमात् । अदृष्टादिनाशे च बुद्धिविनाशस्य कारणताया नाधिक्यम् आश्रयनाशस्याश्रितनाशं प्रति क्लृप्तकारणतयैवोपपत्तेः तथा च तज्जीवोपाधिविगमोऽपवर्ग इत्येतदेवोचितमिति चेन्न बुद्धितत्त्वस्यानादित्वे विनाशानुपपत्तेः भावनाशे जन्यत्वेन प्रतियोगिनो हेतुत्वात् । सादित्वे च बुद्धिधर्मादृष्टप्रवाहस्यापि सादितया प्रथममदृष्टवैचित्र्यं भो-

---

श्रयतासम्बन्धेनादृष्टनाशम्प्रति तत्त्वज्ञानत्वेन कारणत्व एव लाघवादिति भावः । नियामकाभावेनेति । कुत्रचिन्नाश प्रतियोगित्वं कुत्रचिन्नेत्यस्य प्रयोजकाभावेन सुखादावपि तादृशनाशप्रतियोगित्वप्रसङ्गात् इत्यर्थः । भावनाश इति । प्रागभावे व्यभिचारनिरासाय भावपदम् । जन्यत्वेनेति । अन्यथाऽस्मन्मते गगनादौ त्वन्मते च ब्रह्मणि व्यभिचारः स्यात् । सादित्वे च स्वसमानजातीयासमानकालीनप्राग-

गादिकार्यवैचित्र्यञ्च न स्यात् । नचादृष्टजनककृतिवैचित्र्यम् प्रथमतः कृतिवैचित्र्यप्रयोजकस्यैव दुर्लभत्वात् तस्माददृष्टसमवायिनो नित्यत्वमेव अनादिविचित्रादृष्टप्रवाहात् पुंसां भोगवैचित्र्यामीति ।

एतेन मूलप्रकृतिपरिणामविशेषो बुद्धिर्महदाख्यः तत्रैवादृष्टं कृत्यादिकञ्च । पुरुषास्तु कूटस्थचैतन्यरूपाः ।

---

भावप्रतियोगित्वे च । विलक्षणभोगजनकतावच्छेदकादृष्टत्ववत्त्वम् वैचित्र्यं । आश्रयाभावेनादृष्टस्याभावाद्भोगादिकार्यवैलक्षण्यं च न भवेदित्यर्थः । दुर्लभत्वादिति । आदौ बुद्धिरूपाश्रयाभावात्कृतिवैचित्र्यं कथं स्यादिति भावः ।

एतेन साङ्ख्यमतमपास्तमित्यन्वयः । तन्मते त्रिगुणात्मिकाऽचेतना प्रकृतिरेव सत्त्वादिगुणवैषम्यपरिणामद्वारा स्वस्मिन्कारणरूपेणावस्थितामिदं विचित्रं जगत् कूर्म इव कूर्माङ्गानि आविष्करोति कार्यकारणयोरभेदात् सैव सृष्टिः । यदा तु विलोमपरिणामेन स्वस्वकारणक्रमेण स्वस्मिन् विलापयति स कालः प्रलय इत्युच्यते । आविर्भावतिरोभावावेवोत्पादविनाशौ । सृष्टिक्रमस्तूक्त ईश्वरकृष्णेन ।

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥

जन्मधर्मानाश्रयत्वं कौटस्थ्यम् बुद्धिधर्माः कृत्यादयो बुद्धिपरिणामविशेषेणाहङ्कारेण पुंस्यारोप्यन्ते । तदुक्तम्

अहङ्कारविमूढात्मा कर्ताहमिति मन्यते । इति ।

बुद्ध्युपयोग एव पुरुषाणां बन्धः बुद्धेर्लयेन तदनपरागएव तेषामपवर्ग इति साङ्ख्यमतमपास्तम् ।

---

महानिति बुद्धिपर्यायः । एकादशेन्द्रियाणि पञ्चतन्मात्राणि च शोडषको गणः । पञ्चभ्यः तन्मात्रेभ्यः पञ्च भूतानि पृथिव्यादीनि मनुष्यपशुवृक्षादयो पृथिवीविकाराः । पुरुषास्तु न कस्यापि प्रकृतयो विकृतयो वा प्रतिशरीरं भिन्नाश्चैतन्यरूपाः प्रकृतेर्जडत्वेन चेतनोऽहङ्करोमीति चैतन्याभिमानान्यथानुपपत्त्या कल्प्यन्त इति । अदृष्टं धर्माधर्मौ । तत्र धर्मोऽभ्युदयनिःश्रेयसहेतुरधर्मो नरकादिहेतुः । कृत्यादिकमित्यादिपदेन सुखादिपरिग्रहः । कूटस्थोऽविकारी । तदेव विवृणोति जन्यधर्मेति । अहङ्कारेणेति । इन्द्रियालोचितेऽभिमते च विषयेऽहमधिकृतोऽत्र शक्तश्च नान्यः, मदर्था एवामी विषया इत्यभिमानेन मयेदं कर्तव्यमिति बुद्धिव्यापारहेतुना चेतनोऽहं करोमीतिप्रतीतौ चैतन्यांशे प्रकारतया कृत्यादयो बुद्धिधर्मा भ्रमविषया भवन्तीत्यर्थः । इति साङ्ख्यमतमिति । अयमभिप्रायः। तन्मते वत्सविवृद्धये प्रवृत्तानि दुग्धानीवाचेतनापि बुद्धिः पुरुषभोगद-

बुद्धेरुक्तानादित्वसादित्वरूपविकल्पकवलितत्वात् । तदुक्तमाचार्यैः ।

अन्यथाऽनपवर्गः स्यादसंसारोऽथवा पुनः। इति ।

असंसारः संसारावैचित्र्यम् ।

भट्टास्तु नित्यसुखसाक्षात्कारोऽपवर्गः । न च नित्यसुखमप्रामाणिकम् "आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठित"मित्यादिरूपप्रमाणसम्भवात् । आनन्दमिति छान्दसं नपुंसकम्, ब्रह्मणो रूपमात्मनो धर्मः मोक्षे मोक्षसमये प्रतिष्ठितं साक्षात्कृतमित्यर्थः । एतादृशप्रमा-

---

र्शनाय प्रवृत्ता नर्तकीव विचित्रविलासं तन्मात्रादिकं सुखादिकं च प्रकाशयति सुखादयश्च पुरुषेऽहङ्कारेणारोप्यन्ते जयपराजयाविव स्वामिनीति । विकल्पकवलितत्वात् अनादित्वसादित्वरूपकल्पद्वयोक्तदोषप्रसङ्गादिति भावः। अनपवर्गः स्यात् प्रकृतिपुरुषोर्नित्यत्वेन तदुपरागस्यापि नित्यतयाऽनित्यत्वप्रयोजकाभावान्मोक्षाभावः स्यादित्यर्थः । अथवा बुद्धेः सादित्वे प्रथमं बुध्युत्पादकाभावात्संसारवैचित्र्यानुपपत्तिरिति भावः ।

भट्टमत दूषयितुमुपन्यस्यति भट्टास्त्विति । आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचनेत्यादि प्रमाणानुरोधेन बहुतरपदम् । छान्दसमिति । छन्दसि बहुल मित्यनुशासनान्नपुंसकत्वं युक्तमित्यर्थः । लाघवेन तस्य

णेन मोक्षकालीनसाक्षात्कारविषयसुखसिद्धौ लाघवेन तस्योत्पादविनाशाभावसिद्धौ नित्यतायां पर्यवसानात् ।

केचित्तु नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुतिः आनन्दविशिष्टस्यात्मनो नित्यतां बोधयति विशिष्टान्वयपरतया औत्सर्गिकतया असति बाधके त्यागायोगाद्विशेषणस्यानन्दस्य नित्यत्वे सैव प्रमाणमित्याहुः

तच्चिन्त्यम् । तथा सति ततो नित्यज्ञानस्यापि सिद्धिप्रसङ्गात् । न च मीमांसकानां तदनुमतं वेदान्तिनामेव यथाश्रुततादृशश्रुतिबलात् ज्ञानसुखात्मकस्य परमात्मनः सिद्धिः तेषाञ्च तदेकवाक्यतया आनन्दं ब्रह्मणो रूपमित्यस्य सुखं ब्रह्मणः स्वरूपमित्यर्थः । मोक्षे प्रतिष्ठितमित्यस्य च सप्तम्या जनकतार्थकतया भविष्यतीत्यध्याहारेण वा अविद्यानिवृत्तिरूपमोक्षजनकसाक्षात्कारविषय इत्यर्थः ।

---

नित्यत्वे उत्पादविनाशसामग्र्यकल्पनप्रयुक्तलाघवेनेत्यर्थः ।

केचित्त्विति । मीमांसका इत्यर्थः । औत्सर्गिकतयेति । तादृशवाक्यघटितसामान्यसामग्रीलभ्यतया असति बाधके विशिष्टान्वयोऽत्याज्यः सति तु बाधके अजो नित्यः शाश्वतोयमित्यादौ शरीरे जन्मरा-

अथा"शरीरं वा वसन्तं प्रियाप्रिये न स्पृशत" इत्यादिश्रुतिविरोधात् मुक्तस्य सुखसम्बन्धस्वीकारासम्भवः। न च तत्र वाक्यभेदभिया प्रत्येकनिषेधपरता न स्वीक्रियते अपि तु उभयाभावपरतैव तथा च सुखसत्त्वेऽपि दुःखाभावात् उभयाभावसत्त्वेन न विरोधः। अन्यासज्यवृत्त्यनुगतरूपावच्छिन्नाभावपरतया वाक्यभेदपरीहार उपायकारानुमतो न साधीयान् प्रियाप्रिययोरेकपदेन प्रतिपादन एव तत्सम्भवात्

---

हित्यबाधेनात्मन्येव तदन्वयात् तत्याग इति भावः। तथा सति विशिष्टान्वयापरित्यागे सति। नचेति। तथा च मीमांसकैरीश्वरानङ्गीकाराद्विशिष्टान्वयापरित्यागे नित्यज्ञानवतो ईश्वरस्य सिद्धिस्तेषामनभिमताप्यापततेत्यर्थः।

शङ्कते अथेति। वाक्यभेदभियेति। विभिन्नमुख्यविशेष्यताशालिबोधजनकत्वं वाक्यभेदः। तथा च घटपटौ न स्त इत्यत्र प्रत्येकं भूतलं घटाभाववत्पटाभाववच्चेति नानाविशेष्यकबोधाङ्गीकारे भूतलं घटवदितिनिश्चयकाले तादृशप्रतीत्यनुपपत्तेः तादृशप्रतीत्यनन्तरं च भूतलं घटपटोभयाभाववन्न वेति संशयानुदयानुपपत्तेश्चेतिभियेत्यर्थः। अन्यासज्ज्यवृत्ति इति। सुखदुःखान्यतरत्वरूपम्। तत्सम्भवात् तादृशान्यतरत्वधर्मावच्छिन्नाभावप्रतिपादनसम्भवात् इत्यर्थः। वाचकपदाभावेन लक्षणयैव

तावतापि अयोग्यत्वस्यापरीहाराच्च। दुःखाभावादुभया-
भावः सुखाभावाद्वेति विनिगमनाविरहो नाशङ्कनीयः
"दुःखेनात्यन्तं विमुक्तश्चरती"त्यादिश्रुतिबलात् दुःखा-
भावस्य प्रामाणिकत्वात् तस्यैवोभयाभावप्रयोजक-
त्वादिति वाच्यम् यतः प्रियाप्रिये न स्पृशत इत्यनेन
प्रियाप्रिययोरभावो न प्रत्याय्यते अपि तु तदुभयानु-
योगिकमुक्तात्मकर्मकस्पर्शकर्तृत्वाभाव एव। त-
त्कर्मस्पर्शकर्तृत्वं च तदनुयोगिकसम्बन्धप्रतियोगि-
त्वम् प्रिये सुखे तादृशसम्बन्धप्रतियोगित्वास

---

तादृशबोधः स्वीकर्तव्यः स चासम्भवी प्रियाप्रिय इति
वाक्ये लक्षणाऽस्वीकारात् प्रत्येकं लक्षणाङ्गीकारे
ऽपरपदवैयर्थ्यापत्तेरिति तात्पर्यम्। ननु चित्रगुरित्यादौ
यथा गोशब्दो गोस्वामिनि लक्षकः चित्रपदं तु तात्पर्य-
ग्राहकमितीष्यते तथाऽत्रापि स्यादत आह तावतापीति।
अयोग्यत्वस्य बाधविरहाभावस्यापरिहार्यत्वात्तत्र सुख-
सत्त्वेनान्यतरत्वावच्छिन्नाभावो बाधित इति भावः।
यत इति। प्रियाप्रिये न स्पृशत इत्यस्य प्रियाप्रि-
ययोरभावबोधने आख्यातस्य स्वार्थसंख्यान्वयिस-
मानवचनकत्वनियमात् अभावस्यैकत्वाद्द्विवचनानुपपत्तिः
आख्यातार्थसङ्ख्याया आख्यातार्थविशेष्य एवान्वयात्
इति भावः। तदनुयोगिकेति। अनुयोगित्वं कर्मत्व
स्पृशधात्वर्थः सम्बन्धः प्रतियोगित्वं चात्र कर्तृत्व

त्वे च उभयत्वावच्छिन्नेऽपि तत्र तदभावबाधः प्रतियोगिमति व्यासज्यवृत्तिधर्मावच्छिन्नाभावानभ्युपगमात्। न च स्पृशधातुरत्र सत्तार्थकः तथा च घटपटौ न स्त इत्यत्र यथा घटपटोभयाभावेऽस्तित्वं प्रतीयते तथा प्रकृतेऽपि सुखदुःखोभयाभावेऽस्तित्वं प्रतीयते इति वाच्यम्। तथा सति धातोरकर्मकतया शरीरमिति द्वितीयानुपपत्तिः। अनुयोगिनि सप्तमीं विना प्राति-

---

ज्ञेयम्। स्पृशधातोः सत्तार्थकतया शङ्कते नचेति। प्रतियोगिमति व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावानभ्युपगन्तृनये तादृशनियमे घटमात्रवति गृहे घटपटौ न स्त इति प्रतीत्यनुपपत्तिः तादृशगृहवृत्तित्वस्य घटे सत्त्वेनोभयत्वावच्छेदेन तदभावासत्त्वात् अतो गृहवृत्तिघटपटोभयाभाव इति तादृशप्रतीतिबोध्यार्थो वाच्यः तथा चाभावस्यैक्यात् द्विवचनानुपपत्तिः। एवं च यत्प्रातिपदिकार्थान्वितनञर्थे आख्यातार्थान्वयः तत्समानवचनकत्वम् इत्यपि वाच्यम् तथा च प्रकृते स्पृशधातोरस्तित्वार्थकतया सुखदुःखोभयाभावेऽस्तित्व प्रतीयत इति शङ्कार्थः। ननु यतधातोरकर्मकत्वेऽपि यत्नार्थककृञ्धातोः सकर्मकत्ववत् सत्तार्थकस्पृशधातोरपि सकर्मकत्वं स्यादतो दोषान्तरमाचष्टे अनुयोगिनीति। नञर्थाभावानुयोगिनीत्यर्थः। प्रातिपदिकार्थेति। नञ इति शेषः। अन्यथा पटो न घट इत्यतोपि घटाभाववान् पट इति प्रतीतिः

धादिकार्थाभावप्रत्यायनायोगाच्चेति चेन्न मोक्षसुखबो-धकानन्दमित्यादिश्रुतिविरोधभयेन मुक्तात्मनि वि-द्यमानेऽपि सुखे तद्वृत्तितानवच्छेदकोभयत्वाव-च्छिन्ने मुक्तात्मनिष्ठसम्बन्धप्रतियोगित्वाभावोपगमा-त् । एक एव गच्छति नतु द्वावित्यादिव्यवहारात् प्रति-योग्यधिकरणे व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिता-काभावस्यावश्यकत्वाच्च । अथवा न स्पृशत् इत्यस्य

---

स्यात् । चैत्रो न गच्छतीत्यत्रानुयोगिनि विनापि सप्तम-आख्यातार्थाभावप्रत्ययात् प्रतिपादकेति । ननु आन-न्दमित्यादिश्रुतिविरोधपरिहाराय प्रतियोगिवृत्तिनः प-दार्थस्य व्यासज्यवृत्तिधर्मावच्छेदेनाभावस्वीकारेऽति-रिक्तपदार्थकल्पनाप्राप्तिगौरवापेक्षया दुःखाभावपरतयैवा-नन्दपदस्य विरोधवारणे लाघवमित्याशङ्क्याह एक एवेति । तथाच व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिता-काभावः सर्वैरेवाङ्गीकार्यः एवं च स्पृशधातोर्मुख्यार्थ-परत्वमप्युपपन्नमिति भावः । नन्वेककर्तृकगमनस्थलेऽप-रस्मिंस्तत्र्भावसत्त्वेन द्वौ न गच्छत इति बोधस्य द्वि-त्वसामानाधिकरण्येन गमनकर्तृत्वाभावावगाहितयैवो-पपत्तौ व्यासज्यवृत्तिधर्मावच्छिन्नाभावकल्पनमनुचि-तम् । नचैककर्तृकगमनस्थले द्वौ गच्छत इत्यादिप्रयो-गः स्याद्द्वित्वसामानाधिकरण्येन कर्तृत्वस्य विद्यमान-त्वादिति वाच्यम् । नञोऽसमभिव्याहारस्थले व्यास-

उत्पत्तिरूपसम्बन्धप्रतियोगित्वाभावोऽर्थः । नच धातोरु-त्पत्तिरूपसम्बन्धार्थकत्वे जन्यादिवदकर्मकता स्या-दिति वाच्यम् आद्यक्षणानुयोगिकसम्बन्धार्थकतया जनिप्रभृतीनामकर्मकत्वात् । अत्राद्यक्षणाव-च्छिन्नसम्बन्धस्य धात्वर्थतया तदनुयोगितया आत्मनः कर्मतासम्भवात् । अथवा प्रिय-पदं जन्यसुखपरमेव तथा च न कश्चिद्विरोधः ।

---

व्यवृत्तिधर्मावच्छेदेनैव प्रत्ययजनकत्वाङ्गीकारात् । तथा च प्रियाप्रिय इत्यत्र यस्मिन्नेवाभावान्वयस्तत्कथनमु-चितमितरस्य निरर्थकत्वादित्यत आहाथवेति । अ-कर्मकत्वादिति । अनुयोगित्वरूपकर्मत्वस्य धातुबो-धितत्वादिति भावः । कर्मतासम्भवादिति । अत्र धात्वर्थेनानुयोगित्वस्यानुपसङ्ग्रहादकर्मकत्वमेव स्पृश-धातोरिति बोध्यम् । एवञ्चाशरीरमित्यादिश्रुतेर-शरीरात्मानुयोगिताकाद्यक्षणावच्छिन्नसम्बन्धप्रतियोगि-त्वाभाववती प्रियाप्रिय इति वाक्यार्थे पर्यवसितः । अत्र न वै सशरीरस्य सतः प्रियाप्रिययोरुपहति-रस्तीति श्रुतिपूर्वभागस्य शरीरविशिष्टात्मनः सुख-दुःखयोर्नाशोऽनुत्पत्तिर्वा नास्तीत्यनेन शरीरस्यैव सुखदुःखसम्बन्धप्रयोजकत्वपरत्वेनाशरीरमित्याद्युत्तर-भागस्य शरीराभावप्रयोज्यसुखदुःखसत्त्वनिषेधपरता ऽऽवश्यकी । अतएव सुखपदस्य जन्यसुखपरतया

अथ शरीररूपकारणविरहेण मुक्तस्य सुखसाक्षात्कारानुपपत्तिः तत्साक्षात्कारस्यापि नित्यत्वे मुक्तसंसारिणोरविशेष प्रसङ्ग इति चेन्न अवच्छिन्नज्ञानं प्रत्येव शरीरस्य हेतुत्वात् शरीरानवच्छिन्नस्य नित्यसुखसाक्षात्कारस्य शरीरमन्तरेणाप्युत्पत्तिसम्भवात् । न्यायमते नित्येश्वरज्ञाननिवृत्तये जन्यत्वस्यावश्यं निवेशनीयतयाऽवच्छिन्नत्वस्य शरीरजन्यतावच्छेदकत्वप्रवेशेऽपि गौरवानवकाशात् । वस्तु

---

स्पृशधातोश्च सम्बन्धपरतया कल्पान्तरमाह भट्टाचार्य अथवेति ।

शङ्कते अथेति । बाधकाभावेपि अशरीरस्य मुक्तस्य सामग्र्यभावात्कुतः सुखसाक्षात्कार इत्यर्थः । अविशेषप्रसङ्ग इति । तादृशसाक्षात्कारस्य नित्यत्वेन संसारदशायामपि वर्त्तमानत्वादिति भावः । न्यायमत इति । तथा च तन्मतेऽन्यूनानतिरिक्तवृत्तिजन्यत्वमेवावच्छेदकम् तादृशधर्मस्यैवावच्छेदकत्वाङ्गीकारात् अन्यथा द्रव्यत्वस्यापि दण्डजन्यतावच्छेदकत्वापत्तेरिति भावः । ननु पटादौ व्यभिचारित्वादेव द्रव्यत्वस्य नावच्छेदकत्वमङ्गीकर्त्तुं शक्यम् तथा च व्यभिचाराप्रयोजकातिरिक्तवृत्तिधर्मस्यावच्छेदकत्वमक्षतमेव, एवं च न्यायमते जन्यत्वस्य जन्यतावच्छेदककोटावप्रवेशेन तव मत एव गौरवं स्यादत आह वस्तुत इति । तत्स-

तोऽवच्छेदकतासम्बन्धेनैव ज्ञानं प्रति शरीरस्य हेतुतया नित्यसुखसाक्षात्कारस्य तेन सम्बन्धेन कुत्राप्यनुत्पत्तेरशरीरस्यापि तत्सम्भवात् । न चैवमन्यदापि शरीरं विनाऽनवच्छिन्नज्ञानं स्यादिति वाच्यम् शरीराघटितज्ञानसामग्र्यास्तत्तज्ज्ञानघटितत्वात् । नच जन्यज्ञानस्य मोक्षरूपत्वे तन्नाशेऽपि मोक्षोऽपि निवर्तते इति वाच्यम् तत्तज्ज्ञानव्यक्तिनिवृत्तावपि सुखसाक्षात्कारधाराया अनिवृत्तेरित्याहुः ।

तन्न मनोरमम् तन्मतेऽपि दुःखात्यन्तविमोक्षस्य दुःखसाधनदुरितात्यन्तनिवृत्तेर्वा मोक्षदशायामावश्यकत्वेन तत्र तत्त्वज्ञानहेतुताया अपि तथात्वे आत्यन्तिकदुःखादिनिवृत्तेरेव मोक्षरूपताया उचितत्वात्

---

म्भवात् नित्यज्ञानसम्भवात् । तत्त्वज्ञानघटितत्वादिति । त्वङ्मनःसंयोगस्याकारणत्वमतेनेदमन्यथा शरीरनैरपेक्ष्येपि ज्ञानसामान्यहेतोस्त्वङ्मनःसंयोगस्य विजातीयात्ममनःसंयोगस्य च विरहात् कथं नित्यसुखसाक्षात्कारो भविष्यतीति शङ्का दुर्वारा स्यादिति भावः।

गौरवेति । इदमुपलक्षणम् तेन शरीरं विनानवच्छिन्नज्ञानस्वीकारे तदभिमतशरीरकल्पनमप्यनुचितम् । सुखविशेषात्मकस्वर्गस्यानवच्छिन्नत्वस्वीकारेण शरीरं वि-

नित्यसुखे तत्साक्षात्कारादिकल्पनाया एव गौरव-पराहतत्वात् । आनन्दं ब्रह्मणो रूपमित्यत्र आन-न्दपदं दुःखविरहार्थकमेव मोक्षे प्रतिष्ठितमित्यस्य सवासनमिथ्याज्ञानस्य निवृत्तावुत्तरावधिरहितं सत् स्थितमित्यर्थः । मुक्तिः प्रत्यात्मतत्त्वज्ञानं हेतुः आत्मा वारे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षा-त्कर्तव्यश्चैतावदरे स्वल्वमृतत्वमिति श्रुतेः । एतावत्

---

नापि तत्सम्भवादिति ज्ञेयम् । नित्यसुखासत्त्वेपि आन-न्दमिति श्रुतिं न्यायभाष्याद्यनुसारेण समर्थयति आनन्द-पदमित्यादिना । उत्तरावधीति । उत्तरकालनिष्ठाभावप्र-तियोगित्वरहितमित्यर्थः । कारणाभावाद्दुःखानुत्पत्तौ उत्तरकालस्य तदनधिकरणत्वेन तदभावस्यैव सम्ब-न्धतावच्छेदकत्वादित्यभिप्रायः । नन्वात्यन्तिकदुःख-ध्वंसरूपमुक्तिपक्षे सा कुतो भवतीत्याशङ्क्याह मुक्तिं प्रतीति । तत्र प्रमाणं दर्शयति बृहदारण्यके आत्मे-ति । भगवान् याज्ञवल्क्यः मुमुक्षुं स्वभार्यां मैत्रेयीं सम्बोध्याह अरे इत्यादिना । तत्र विधिविहितत्व्य-चतुष्टयेनैतावदित्यादिनैकवाक्यतया मोक्षरूपेष्टसाधनत्वं बोध्यते । तस्य च धात्वर्थश्रवणादावन्वयात् तादृशश्रव-णादिविषयत्वस्यात्मन्येवान्वयेन चात्मश्रवणादेर्मोक्ष-कारणत्वलाभ इति । हेतुरिति । अत्र हेतुत्वं अन्नं वै प्राणा इत्यादाविव लक्षणया लब्धम् इति भावः । तत्रे-

श्रवणादिरूपं ज्ञानममृतत्वममृतत्वस्य मोक्षस्य हेतुः । तत्र कारणम् सवासनमिथ्याज्ञानोन्मूलनक्षमः श्रुतिस्मृत्युपदिष्टयोगविधिना चिरनिरन्तरादरसेवितनि-

---

ति । कारणं साक्षात्कार एवेत्यन्वयः । साहित्यार्थकचकारेण समुच्चितात्मश्रवणादिभ्यो मुक्तिर्भवतीति प्राप्तेऽपि एकदा ज्ञानचतुष्टयानां सत्त्वासम्भवात् मननादेर्वासनानाशकत्वाभावाच्च आत्मसाक्षात्कारः साक्षात्कारणम् मुक्तेः, श्रवणादिकन्तु तद्द्वारेति भावः । तादृशसाक्षात्कारेण नष्टेऽपि मिथ्याज्ञाने पुनर्वासनारूपदोषसत्वेन मिथ्याज्ञानं स्यादत आह सवासनेति । श्रुतिस्मृतीति । "ते ध्यानयोगानुगता अपश्यन्निति" श्रुत्या

मन एकत्र संयुज्याज्जिताश्वासो जितासनः ।
वैराग्याभ्यासयोगाभ्यां ध्रियमाणमतान्द्रितः ॥

सोहमस्मीत्युपासीत इत्यादिस्मृतिभिश्चोद्दिष्टविधिनेत्यर्थः । चिरेत्यादि । तादृशनिदिध्यासनात्मकयोगजन्यधर्मप्रयोज्य इत्यर्थः । एतदेव पातञ्जलयोगसूत्रेप्युक्तम् । तद्यथा "स तु दीर्घकालादरनैरन्तर्यसत्कारसेवितो दृढभूमिः" । इति । सोऽभ्यासः दीर्घकालं बहुकालं नैरन्तर्यं निरन्तरं सत्कारेण श्रद्धया आ सम्यक् सेवितः सम्पादितः सन् दृढभूमिर्दृढावस्थो भवति न तु विरोधिसंस्कारैरभिभूतो भवति इत्यर्थः । अभ्यासस्तु "तत्र स्थितौ यत्नोऽभ्यासः" ॥ चित्तैकाग्रतापरिणाम उत्साह इत्यर्थः । सा च

दिध्यासनयोगजधर्मप्रयोज्यः शरीरभिन्नत्वेन आत्मनः साक्षात्कार एव शाब्दादिज्ञानस्य देहाभेदवासनारूपदोषविशेषजन्यायामहं गौर इत्यादिमिथ्याबुद्धौ अप्रतिबन्धकत्वात्तज्जन्यवासनायाः अनाशकत्वाच्च । श्रवणादिकञ्च तद्द्वारा मोक्षोपयोगि अतए संसारदशायामपि शास्त्राधीनश्रवणपदवाच्यशाब्दबोधरूपात्मज्ञानस्य मननपदवाच्यायाः शास्त्रादिबोधितवैधर्म्यलिङ्गकात्मपक्षकेतरभेदानुमितेः श्रवणादिमूलकसंस्काराधीनतत्समानविषयकध्यानोपहितेच्छाप्र

---

स्थितिर्न्यायमते सवासनमिथ्याज्ञानराहित्यपर्यवसन्ना तत्साधनानुष्ठानं निदिध्यासनान्तमिति । अप्रतिबन्धकत्वादिति । दोषाजन्यत्वस्य प्रतिबध्यकोटौ निवेशात् । अनाशकत्वादिति । स्वजनकज्ञानविरोधिज्ञानस्यैव संस्कारनाशकत्वादिति भावः । अत एव श्रवणादेः साक्षात्साक्षात्कारकारणत्वाभावादेव । वैधर्म्यलिङ्गकेति । आत्मा शरीरादिभिन्नः अनादित्वात् यन्नैवं तन्नैवमिति व्यतिरेक्यनुमितेः । ध्यानोपहितेच्छाया इति । उपहितत्वं वैशिष्ट्यम् । तच्च स्वाव्यवहितपूर्वकत्वस्वसामानाधिकरण्योभयसम्बन्धेन बोध्यम् । एतेन विशिष्टान्वयसम्बन्धात् ध्यानस्यापि हेतुत्वं लभ्यते इच्छायास्तु ध्यानद्वारा, अतो न त्रिधा इत्यादिवचनलब्धस्य ध्यानहेतुत्वस्य विरोधः ।

निदिध्यासनपदवाच्यायाः सत्त्वेऽपि न मोक्षोत्पत्तिः । न च श्रवणादिसत्त्वेऽपि आत्मतत्त्वसाक्षात्कार एव कथमिदानीं नोत्पद्यत इति वाच्यम् तस्य चिरकालीनध्यानपरम्परासाध्यत्वात् । तदुक्तम् ।

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥

ध्यानाभ्यासरसः पौनःपुन्येन स्मरणेच्छा । त्रिधा प्रज्ञां श्रवणमनननिदिध्यासनरूपात्रिविधज्ञानं प्रकल्पयन् सम्पादयन् उत्तमं योगमात्मतत्त्वसाक्षात्काररूपं लभते इत्यर्थः । श्रुतिबोधितेऽपि शरीरादिभिन्ने आत्मनि यथाश्रुतश्रुत्यन्तरार्थविरोधेन तादृशश्रुतेरर्थान्तरपरत्वशङ्कया तादृशबोधे भ्रमत्वशङ्कासम्भवात् अश्रद्धया निदिध्यासनं न घटत इति श्रवणानन्तरं मनन-

---

श्रुतिबोधितेपीति । प्रत्यगस्थूलोऽचक्षुरप्राणोऽमना अकर्ता चैतन्य चिन्मात्रं सदित्यादिश्रुतिबोधित इत्यर्थः । श्रुत्यन्तरेति । स वा एष पुरुषोऽन्नरसमय इत्यादि श्रुत्यन्तरार्थविरोधेनेति भावः । अर्थान्तरपरत्वशङ्कयेति । प्रत्यगस्थूल इत्यादिश्रुतेः आत्मा वारे इत्यादिनिखिलात्मस्वरूपप्रतिपादकश्रुतेश्चान्नरसमयशरीरपरत्वशङ्कयेत्यर्थः । तादृशबोधे इति । अस्थूलाशरीरत्वादिबोधे इति भावः । अत एवात्मनि शरीरादिभि-

स्योपयोगः । युक्तिसिद्धेऽर्थे प्रमितत्वावधारणेन मनने सत्यश्रद्धानिवृत्तेः । अत एव युक्तिशास्त्रस्य न्याय-वैशेषिकादेरध्ययनं मोक्षे उपयुज्यते ।

केचित्तु ईश्वरात्मसाक्षात्कार एव मोक्षे कारणम् तस्यातीन्द्रियत्वेपि योगजधर्मरूपप्रत्यासत्तेस्तत्साक्षात्क सम्भवः। न चात्मा श्रोतव्य इत्यादावात्मपदस्य जीवात्मपरतासम्भवात् ईश्वरसाक्षात्कारस्य मोक्षहेतुत्व-मप्यप्रामाणिकमिति वाच्यम् । "वेदाहमेतं पुरुषं प्रधानमादित्यवर्णं तमसः परस्तात्"इत्यनेन ईश्वर-

---

श्रत्वाद्यंशेऽप्रामाण्यशङ्कारूपाश्रद्धानिवृत्तेरेव । उपयुज्यत इति । तत्र न्यायदर्शने तृतीयाध्याये "दर्शनस्पर्शनाभ्यामेकार्थग्रहणा"दित्यादिना, वैशेषिकदर्शने च ३-अ० २ पादे "प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तराविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानी"त्यादिना च सूत्रेण महर्षिगौतमकणादाभ्यां देहाद्यतिरिक्तत्वस्यात्मनि साधितत्वात् ।

वेदेति । अहमेतं परमात्मानं वेद जाने । किंरूपं पुरुषं पूर्णं महान्तं प्रधानं सर्वव्यापकत्वादादित्यवर्णं स्वप्रकाशरूपं न्यायमते जीवब्रह्माभेदभावनया साक्षात्कारविषयम् । तमसो मिथ्याज्ञानात्परस्तादतीतः तच्छून्य इति यावत् । तमेवेति । तमात्मानं ज्ञात्वा मृत्यु-

मुपक्रम्य तमेव विदित्वाऽतिमृत्युमेतीत्यनेन तद्वेदनस्यैव मोक्षहेतुताबोधनात् तदेकवाक्यतया आत्मा श्रोतव्य इत्यादावपि आत्मपदस्य ईश्वरपरत्वात् । अतएव

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥

इत्याचार्यग्रन्थोपि सङ्गच्छते । नचेश्वरसाक्षात्कारस्य स्वात्मविषयकमिथ्याज्ञाननिवर्तकत्वं न विपरीतज्ञानविधया अपि तु स्वात्मतत्त्वसाक्षात्कारस्यैवेति स एव मोक्षहेतुरिति वाच्यम् वासनारूपदोषविनाशकतयैवेश्वरसाक्षात्कारस्य मिथ्याज्ञाननिवर्तकत्वात् । ईश्वरसाक्षात्कारस्य विपरीतज्ञानानिवर्तकत्वेपि स्वातन्त्र्येणैव मिथ्याधीजन्यवासनानाशकत्वोपगमे क्षतिविरहात् । संस्कारावि-

---

रहितो मुक्तो भवतीत्यर्थः । इदमत्र तात्पर्यम् यदा तमेवेत्यादिना मुक्तिप्रयोजकत्वमीश्वरसाक्षात्कारस्यैव लब्धम् तदा आत्मा वारे इत्यादिश्रुतेरपि तदर्थकतयैवोपपत्तौ जीवपरतायां गौरवेण सम्भवत्येकवाक्यत्वेत्यादिन्यायेन च अन्याय्यत्वात् तथाचात्मपदं सर्वत्रेश्वरपरम् नतु जीवात्मपरमिति भावः । न्यायचर्चा न्यायजन्यानुमितिः । मिथ्याज्ञाननिवर्तकत्वात् शरीराद्यभेदज्ञानानुत्पादकत्वात् । नाश्यनाशकभावभेदादिति । तत्तत्प्रकारकसंस्कारनाशं प्रति तत्तदभावप्रकारकनि-

परीतज्ञानयोर्विषयभेदेन नाश्यनाशकभावभेदादात्मदेहाभेदवासनानाशे देहभेदावगाहिस्वात्मसाक्षात्कारकारणताया अपि कल्पनीयतया ईश्वरसाक्षात्कारस्य तन्नाशकतापक्षे गौरवानवकाशात्

अस्तु वा वासनानाशार्थं स्वात्मतत्त्वसाक्षात्कारोपयोगः अनुयोगितया प्रतियोगितया चात्मैतत्त्वतो ज्ञेय इत्याचार्यग्रन्थस्याप्यत एव सङ्गतिः मोक्षकारणन्तु परमात्मसाक्षात्कार एव । न च योगजधर्मस्य विश्वभासकतया तज्जन्यपरमात्मसाक्षात्कारे विश्वेषामेव भानसम्भवे तमेव विदित्वेत्यत्र

---

श्चयत्वेन विशिष्य नाश्यनाशकभावसत्त्वात् न तु सामान्यतो विपरीतज्ञानत्वेन तथासति घटादिमत्तासंस्कारम्प्रति पटाभावादिनिश्चयोपि नाशकः स्यात् । एवं च जीवात्मसाक्षात्कारवादिमतेपि आत्मधार्मिकशरीराद्यभेदप्रकारकसंस्कार प्रति शरीरादिभेदसाक्षात्कारस्य नाशकतायाः अवश्यं कल्पनीयतया तत्स्थले ईश्वरसाक्षात्कारस्यैव तादृशसंस्कारनाशकत्वकल्पने गौरवाभावादिति भाव. । नन्वेवं गौरवाभावेपि विपरीतज्ञानस्यैव 'सर्वत्र संस्कारनाशकत्व दृष्टमिति दृष्टान्ताभावादीश्वरसाक्षात्कारस्य तन्नाशकत्व कल्पनमन्याय्यमत आह अस्तु वेति । अनुयोगिनयेति ।

एवकारबोध्यस्य तदितराविषयकत्वव्यवच्छेदस्ये-श्वरवेदने बाध इति कथं तादृशश्रुतेरीश्वरपरतेति वाच्यम् । आत्मसाक्षात्कारस्यापि भवदभिमतमोक्षहेतो-र्देहादिभेदविषयकतया तत्रापीतराविषयकत्वव्यवच्छेद-बाधादस्मदभिमतमोक्षहेतुपरमात्मनिर्विकल्पकस्यैव त-त्सामग्र्याः प्रतिबन्धकत्वकल्पनया तदितराविषयक-त्वोपपत्तेः । तं विदित्वैव इत्येवकारव्यत्ययेन व्या-ख्यायाः समाधानमपि तुल्यमुभयमते । वस्तुतस्तु एवकारव्यत्यये एवकारस्यैव वैयर्थ्यम् नान्यः पन्था विद्यतेऽयनायेत्यनेन मुक्तिसामग्रीमात्रे तत्त्वज्ञानघटि-तान्यत्वनिराकरणात्तत एव एवकारलभ्यस्य मुक्तिपूर्वं समानाधिकरणतत्त्वज्ञानावश्यकत्वस्य लाभात् । अत ईश्वरसाक्षात्कारस्यैव कारणतामुचितम् तथा सत्युक्त-

---

ईश्वरभेदप्रकारतानिरूपितानुयोगित्वनिष्ठसांसर्गिकविष-यतानिरूपकज्ञानीयविशेष्यताश्रय आत्मा इत्यर्थः । तत्सामग्र्या इति । योगजधर्मविशेषघटितकारणकूटस्ये-श्वरेतरविषयकज्ञानं प्रति प्रतिबन्धकत्वकल्पनयेति भावः । नान्य इति । अन्यः परमात्मसाक्षात्कारा-दन्यः, पन्था असाधारणकारणम्, अयनाय मोक्षा-य, तथा च तदन्यो मोक्षस्यासाधारणं कारणं ना-स्तीत्यर्थः । अत इति । स्वात्मसाक्षात्कारस्य मु-

रीत्या एवकाराव्यत्यासेपि निर्वाहसम्भवात् । अथ यतो वा इमानि भूतानि जायन्ते तत्त्वमसि श्वेतकेतो इति जीवात्मनः परमात्माभेदोपदेशकश्रुतिस्वरसादहं ब्रह्मास्मीत्येतादृशज्ञानस्यैव भवतो मुक्तिहेतुताया उपगन्तव्यतयाऽव्यस्तैवकारलभ्यस्य मुक्तिजनकेश्वरज्ञाने तदितरविषयकत्वबाध इति भवतोऽपि तद्व्यत्यास आवश्यकः । एतेनैवकारेण मोक्षहेतुतद्वेदने तदन्यविषयकत्वं न व्यवच्छिद्यते किन्तु मुक्तौ तद्विषयकत्वविशिष्टवेदने प्रयोज्यताया भावान्वयबोधविषयतया तदन्यविषयकत्वविशिष्टतद्वेदनप्रयोज्यत्वमेव तत्रैवका

---

क्तिहेतुतामते एवकारव्यत्यासं विना गतिविरहेण वैयर्थ्यभयादित्यर्थः । जीवात्मसाक्षात्कारवादी शङ्कते अथेति । यतो वेति । येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीति शेषः । यतो ईश्वरत इमानि भूतानि ब्रह्मादिस्थावरान्तानि जायन्त उत्पद्यन्ते जीवन्ति प्राणान् धारयन्ति यत् येन प्रयन्ति विनश्यन्ति अभिसंविशन्ति साम्यं गच्छन्ति दुःखाभाववत्त्वेनेत्यर्थः । अव्यस्तेति । अन्यत्रायोजितेत्यर्थः । एतेनेत्यस्य निरस्तमित्यत्रान्वयः । भावान्वयबोधविषयतयेति । आत्मविषयकविशिष्टबोधप्रयोज्यताया एवकारोपस्थाप्यव्यवच्छेदप्रतियोगित्वेनान्वयबोधे तात्पर्यविषयतयेत्यर्थः । तदन्यविषयकत्वेति । अत्रायमभिप्रायः । एवकारस्य भेद-

रेण व्यवच्छिद्यते । तथा च तदन्यविषयकत्वस्य मुक्तिप्रयोजकत्वव्यवच्छेदः पर्यवसित इति सामग्रीत्ववशादीश्वरसाक्षात्कारेऽनुपयुक्तस्यभानस्यावश्यकत्वेऽपि न क्षतिः । जीवात्मसाक्षात्कारस्य हेतुतामते पुनरेवकाराव्यवच्छेदे नोक्तरीत्यापि न निर्वाहः । इतरभेदादिविषयकत्वेनैव तन्मते आत्मसाक्षात्कारस्य हेतुतया इतराविषयकत्वे मोक्षप्रयोजकताया व्यवच्छेत्तुमशक्यत्वादित्यपि निरस्तम् । ब्रह्मैवाहं न संसारीत्यादिभावनादिविध्येकवाक्यतया अहं ब्रह्मास्मीति बुद्धेर्न्यायादिमते ब्रह्माभिन्नजीवात्मविषयकत्वेनापि मुक्तिहे-

---

विशिष्टेऽभावे च खण्डशः शक्तिः भुक्त्वा तृप्तो नतु पीत्वा इत्यादि प्रत्ययानुरोधेन विदित्वेत्यत्र क्त्वाप्रत्ययस्य प्रयोज्यत्वमर्थः । तथा चैवकारलभ्यभिन्नैकदेशे भेदे तमिति तत्पदोपस्थाप्येश्वरस्यान्वयः, एवं ईश्वराभिन्नस्य विदधात्वर्थज्ञाने विषयतया, एवकारलभ्याभावे च ईश्वरभिन्नविषयकज्ञानप्रयोज्यत्वस्य क्त्वान्तार्थस्य प्रतियोगितया चान्वयः । तथा चेश्वरभिन्नविषयकत्वाविशिष्टज्ञानप्रयोज्यत्वाभावबोध इति भावः । ब्रह्मैवाहमिति । न्यायमते विदित्वेत्यस्य तत्त्वमसीति वाक्यलभ्यभावनयाऽहं ब्रह्मास्मीति बुद्धेर्ब्रह्माभिन्नजीवात्मविषयकत्वेनापि मुक्तिकारणताया वक्तुं शक्यत्वादित्यभिप्रायः । ननु परमात्मजीवात्मनोर्भेदेन तयोरभेदज्ञानस्य भ्रमत्वात्कथं तस्य

तुत्वात् । आत्मनानात्वमते जीवात्मब्रह्मणोरभेदज्ञानं यद्यपि भ्रमस्तथापि तादृशस्यैव तस्य मोक्षहेतुत्वं श्रुतिसिद्धं न विरुद्ध्यते इति चेन्न जीवब्रह्माभेदचिन्तनरूपस्य योगस्याभ्यासेन मोक्षकारणमीश्वरसाक्षात्कारः सम्पद्यत इत्यत्रैव तत्त्वमसीति वाक्यतात्पर्येण यथाश्रुतस्य तत्रैव विदित्वेत्यस्य सामञ्जस्यादिति वदन्ति।

दीधितिकृत्प्रभृतयस्तु न वारे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवतीत्यादिनात्मनः सुखाद्यर्थं तत्सम्पादकतया पतिपुत्रादेरनुरागविषयत्वरूपं प्रियत्वमुक्तम् तत्रात्मपदमात्म-

---

मुक्तिजनकत्वं यथार्थज्ञानरूपतत्त्वज्ञानस्यैव मुक्तिहेतुत्वादित्याशङ्कते आत्मनानात्वमत इति । आत्मनानात्वं चात्मत्वाविशिष्टभेदत्वम् । वैशिष्ट्यं च स्वाश्रयप्रतियोगिकत्व–स्वाश्रयानुयोगिकत्वोभयसम्बन्धेन । आत्मत्वव्याप्यपर्याप्तिकत्वान्यसङ्ख्यारूपं वा नानात्वं बोध्यम् । समाधत्ते तथापीति । अगत्या तत्त्वज्ञानपदस्य तादृशाभेदज्ञानपरत्वमेव कल्पनीयमिति भावः । अत्र आत्मा वाऽरे इत्यादिश्रुतेरयुक्तार्थत्वकल्पनमेव वदन्तीत्यनेनास्वरसः सूचितः ।

आत्मपदस्य जीवपरत्ववादिनां दीधितिकृतां मतमुत्थापयति दीधितिकृदिति । नवारे इत्यादि । पत्न्या इति शेषः । पत्युः सुखमात्रमुद्दिश्य पत्न्या न पतिः प्रि

परमेव न त्वीश्वरपरं तस्य सुखाभावात् । तत्रानन्दं मन्यमानानामपि तदानन्दस्य नित्यत्वाभ्युपगमात्तस्योद्देश्यत्वासम्भवात् । "सर्वेषामेव भूतानां नृप स्वात्मैव वल्लभ" इत्यादावपि स्वात्मन एव निरुपाधिप्रियत्वाभिधानात् एवञ्च स्वात्मन एवोपक्रान्ततया आत्मा वारे श्रोतव्य इत्यादिश्रुत्या स्वात्मनः श्रवणादेरेव मोक्षहेतुता प्रतीयते, न तु परमात्मनः । नच मिथ्याज्ञानवासनाधर्माधर्मोच्छेदद्वारा आत्यन्तिकदुःखनिवृत्तावुपयोगित्वं स्वात्मतत्त्वज्ञानस्य तादृशश्रुतितात्पर्यविषयोऽस्तु तावतापीश्वरसाक्षात्कारस्य तमेव विदित्वेत्यादिश्रुतिसिद्धमपवर्गहेतुत्वं निराबाधमेवेति वाच्यम्

---

यो भवति किन्तु स्वसुखमुद्दिश्य पतिरनुरागविषयो भवतीत्यर्थः । स्वव्यापारजन्यस्नेहभागित्वेनोत्कटेच्छा अनुरागः । तुष्यतु दुर्जन इति न्यायेन जीवात्मनो निरुपाधिप्रियत्वे जीवमात्रबोधकपदघटितप्रमाणमाह सर्वेषामेवेति । तथा च वल्लभ इत्यस्य निरूपाधिप्रिय इत्यर्थः । अहं सुखी स्यामित्याकारकस्वेतरधर्मिकसुखवत्त्वप्रकारकेच्छानधीनसुखवत्त्वेच्छाविषयत्वं निरूपाधिप्रियत्वम् । एवं चेश्वरसुखस्यानुद्देश्यत्वे स्वात्मन एव निरुपाधिप्रियत्वे च । श्रवणादेरेवेति । सर्वेभ्यो दर्शपौर्णमासावित्यत्र सर्वशब्दस्य प्रक्रान्तपश्वा-

धर्माधर्मोच्छेदेनैवात्यन्तिकदुःखादिविगमरूपमुक्तिनिर्वाहे तत्र परमात्मसाक्षात्कारस्य हेतुतायां युक्तिविरहे तमेव विदित्वा इत्यादिश्रुतेर्जीवब्रह्माभेदचिन्तारूपयोगाभ्यासस्य स्वात्मसाक्षात्कारसम्पादनद्वारा मुक्त्युपयोगितायामेव योगाभ्यासविध्येकवाक्यतानुरोधेन तात्पर्यकल्पनौचित्यात् । एवञ्च एवकारव्यत्यासोऽपि न क्षतिमावहति । नान्यः पन्था विद्यते इत्यादिभागस्य च एवकारस्य तात्पर्यप्रकाशकत्वेन सार्थक्यसम्भवात् महेश्वरस्त्र्यम्बक एव नापर इत्यादौ नापरभागस्येवेत्याहुः ।

तन्मते योगिनस्तं प्रपश्यन्ति भगवन्तमधो-

---

दिफलवत्त्व इवात्मसमुदायस्य श्रवणाद्यसम्भवेनात्मन एकस्य श्रवणादिमत्त्वं प्रकरणमेव विनिगमक वाच्यमित्यभिप्रायः । युक्तिसिद्धार्थकल्पनमेव ज्याय इत्याशयेन समाधत्ते धर्माधर्मेति । एवं च तमेवेत्यस्य जीवब्रह्माभेदचिन्ताया मोक्षोपयोगित्वपरत्वे च । महेश्वर इति । तथा चैवकारेणैव त्र्यम्बकान्ये महेश्वरपदप्रतिपाद्यत्वव्यवच्छेदप्रतिपादनात् यथा नापर इति भागो तद्विवरणरूपतया सार्थकस्तथाऽत्रापीति भावः ।

तन्मते योगाभ्यासस्य जीवात्मसाक्षात्कारफलकत्ववादिमते । योगस्य योगजधर्मद्वारा वि-

क्षजमित्यादीनां योगाभ्यासस्य परमब्रह्मसाक्षात्कार-फलकत्वरूपयथाश्रुतार्थे विरोधो दुष्परिहरः।

अथ काश्यादिमरणपुरुषोत्तमादिमुखदर्शनादि-रूपकर्मणामपि बहुशो मोक्षोपायताश्रुतेः कथं नान्यः पन्था इत्यादेः सामञ्जस्यम् कथं वा अननुगतानां ज्ञानकर्मविशेषाणामनुगतं मोक्षम्प्रति हेतुतानिर्वाहः। तृणारणिमणीनां वह्निहेतुता च कार्यवैजात्येनेति

---

अवभासकतया ईश्वरभासकत्वमर्थादापतितमिति वस्तुस्थितिमनुरुध्य भावर्वणनेन विरोध इत्याह यथाश्रुतार्थ इति। तथा च ज्ञात्वा ज्ञात्वा गरल-भोजी याति यमालयमित्यत्र गरलभोजनस्य साक्षा-न्मरणफलकत्वबोधस्येव योगिन इत्यत्र योगस्य सा-क्षात्परमात्मसाक्षात्कारफलकत्वबोध इति भावः। ननु सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण चेत्यादि श्रुत्याः,

उभाभ्यामेव पक्षाभ्यां यथा स्यात् पक्षिणो गतिः।
तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्॥

इत्यादि स्मृत्या च ज्ञानवत् कर्मापि मुक्तिकारणं ल-भ्यते तत्कथं तमेवेत्यादिना ज्ञानस्यैव तद्धेतुत्व-मुच्यत इत्यभिप्रायेणाशङ्कते अथेति। कर्मणां मोक्ष-हेतुत्वे व्यभिचारमपि दर्शयति कथं वेति। तृणारणीति। वह्नौ तृणादीनां निरपेक्षनानाव्यक्तीनां कारणत्वं तु

व्यभिचारविरहात् । मोक्षे चाभावरूपे न जातिविशेष-कल्पनसम्भवः । न च प्रतियोगिनि दुःखे दुरिते वा जातिविशेषान् कल्पयित्वा तदवच्छिन्नप्रतियोगिनां स्वाश्रयप्रतियोगिकत्वसम्बन्धेन तेषामेव वा जन्य तावच्छेदकत्वमुपगम्य व्यभिचारः शक्यते वारयितुम् गोवधादिजन्यतावच्छेदकजातिभिः सङ्करप्रसङ्गेन जातिकल्पनानवकाशात् । नच गोवधादिजन्यतावच्छेदकजातीनां नानात्वोपगमान्न सङ्करप्रसङ्ग इति वाच्यम्

---

कार्यवैलक्षण्यान्न व्यभिचारीत्यर्थः । अभावरूप इति । तथा च सम्बन्धाभाव एव जातिबाधक इति तात्पर्यम् । तदवच्छिन्नप्रतियोगिनामिति । प्रतियोगितासम्बन्धेनेति शेष. । सङ्करप्रसङ्गेनेति । तत्त्वज्ञाननाश्यतावच्छेदकजातिशून्ये काशीमरणादिनाश्यदुरिते गोवधादिजन्यतावच्छेदकजातेस्तादृशजातिशून्ये च ब्रह्मवधादि जन्यदुरिते तत्त्वज्ञाननाश्यतावच्छेदकजातेश्चाभावात्तत्त्वज्ञानविनष्टगोवधादिजन्यदुरिते चोभयसमावेशात्सङ्करप्रसङ्ग इत्यर्थः । दुर्लभत्वादिति । तत्त्वज्ञानकाशीमरणादिजन्यतावच्छेदकजातिव्याप्या यावत्यो गोवधादिजन्यतावच्छेदकजातयः सम्भवन्ति गोवधादिजन्यतावच्छेदकजातिव्याप्यास्तत्त्वज्ञानादिनाश्यतावच्छेदकजातयोऽपि तावत्यस्सम्भवन्तीति विनिगमनाविरहस्तथाच गोवधादीनां तत्तज्जात्यवच्छिन्नकार्यतानिरूपितकारण-

तासां नानात्वं तत्त्वज्ञानादिनाश्यतावच्छेदकजातीनां वा नानात्वमित्यत्र विनिगमकस्य दुर्लभत्वात् । एवं वेदबोधितवैकल्पिकहेतुतास्थले समुचितेभ्यो न फलसिद्धिः सम्वलितव्रीहियवाभ्यामेकयोगाननुष्ठानादिति तृणारणिमणिवज्ज्ञानकर्मणां हेतुत्वे तत्सम्वलने मोक्षाभावप्रसङ्गात् । नापि ज्ञानकर्मणां समुच्चितानां मोक्षहेतुतास्वीकारात् सामञ्जस्यम् तत्त्वज्ञानोपाययोगाभ्यासऽसाध्यताबुद्धौ मोक्षहेतुतत्तत्कर्मसु

---

तानां तत्त्वज्ञानकाशीमरणादीनाञ्च तत्तदनन्तजात्यवच्छिन्नकार्यतानिरूपितकारणतानां च कल्पनेनातीवगौरवात् दुर्ज्ञेयत्वाच्च तदसम्भव इत्यशयः । ननु दुरितनिष्ठतत्त्वज्ञानादिजन्यतावच्छेदकजात्यङ्गीकारे तत्तज्जात्यवच्छिन्नं प्रति गोवधत्वादिना कारणताया वक्तव्यतया तादृशजन्यतावच्छेदकवैजात्यमेव कल्पनीयम् तत्त्वज्ञानादिनाश्यतावच्छेदकजातिकल्पने च तत्तज्जात्याश्रयनाशम्प्रति तत्त्वज्ञानत्वादिना कारणताया वाच्यतया तत्तज्जातिस्तदाश्रयादिषु अवच्छेदकत्वेन गुरुधर्मावच्छिन्नानन्तकारणताकल्पने परमते गौरवमेव, अव्यवहितोत्तरत्वं कार्यतावतावच्छेदककोटौ प्रवेश्य वा व्यभिचारो निरसनीय इत्यत आह एवमिति । नापीति । एतेन तत्त्वज्ञानादीनामसहभावेन कारणतायामुक्तदोषेऽपि साहित्येन सा

प्रवृत्त्यनुपपत्तेः मथुराकाशीमरणादीनां संवलनासम्भ-
वात् । साहित्यविनिर्मोकेण श्रुत्याऽनेकेषां कारणता
यत्र प्रत्यायते तत्र विकल्प एव व्रीहियवादिवदि-
त्युपायकारोक्तसिद्धान्तभङ्गस्यैवमापद्येत तदनादरे
व्रीहियवस्थलेऽपि समुच्चयप्रसङ्गात् वाजपेयाग्निष्टो-
मादीनामपि मिथः सहकारिताप्रसङ्गाच्चेति ।

नैवम् । सर्वत्रात्मतत्त्वज्ञानमेव साक्षान्मोक्षे हेतुः
काशीमरणादेश्च तत्त्वज्ञानद्वारैव मोक्षोपायता काशी-
मरणादीनां मोक्षापायताबोधकश्रुतीनां तत्कारणतया
नार्थ अपितु प्रयोजकत्वमेव । अत एव ज्ञानेन सह
काशीमरणादेर्द्वारिद्वारिभावेन समुच्चयेऽपि साहित्यं

---

स्यादित्यपि निरस्तम् । तत्तत्कर्मसु काशीमरणा-
दिषु । ननु येषां कर्मणां संवलनमसम्भवी तत्सहभावे-
न ज्ञानादीनां पृथक् पृथक् हेतुत्वं वाच्यम् व्यभिचारो-
प्यव्यहितोत्तरत्व निवेश्य वारणीय अत आह साहित्ये-
ति । ननु स सिद्धान्तस्तादृशस्थल एवेत्याशङ्क्याह
वाजपेयेति । सामान्यतः स्वर्गफलकानामग्निष्टोमादीनां
श्रुत्या प्रतिपादनात्तादृशसिद्धान्तानङ्गीकारे मिलितानां
तेषां कारणत्वापातः इष्टापत्तौ पृथगनुष्ठानानुपपत्तिः ।
उक्तसिद्धान्तस्वीकारे व्यभिचारवारणन्तु कार्यवैजात्यं
प्रकल्प्य सुकरमिति भावः ।

विना वेदबोधितानेककारणतास्थले समुच्चय इति सिद्धान्तस्याप्यविरोधः। तत्त्वज्ञाने मानमात्मके काशीमरणजन्यतावच्छेदकतया जातिविशेषाणां मानसत्वव्याप्यानां कल्पयितुं शक्यतया मिथो व्यभिचारानवकाशात्। मृतशरीरावच्छेदेन ज्ञानोत्पत्त्यसम्भवेन काशीमरणाद्युत्तरं शरीरान्तरपरिग्रहोऽपि कल्प्यतेऽनन्यगतिकत्वात्। भगवतो महारुद्रस्य तारकोपदेशस्तु मुमूर्षुतादशायामेव मृतस्योपदेशासम्भवात् तथा च

---

ज्ञानकर्मणां व्यापारव्यापारिभावमवलम्ब्य समाधत्ते नैवमिति। साहित्य विनेति। स्वकारणतासाहित्यबोधकपदं विनेति तदर्थः। ननु तत्त्वज्ञानहेतूनां योगाभ्यासकाशीमरणादीनामनेकत्वेन परस्पर व्यभिचारः स्यादत आह तत्त्वज्ञान इति। मुमूर्षुतादशायां मरणाव्यवहितप्राक्क्षणे। उपदेशासम्भवादिति। उपदेशो हि परज्ञानफलकस्तथा च मृतस्य शरीराभावाज्ज्ञानोत्पत्त्यसम्भवेन न तत्रास्य प्रवृत्तिरिति भावः। अत्रेति। अत्र काश्याम् प्राणेष्वित्यत्र प्राणनिर्गमनप्राक्कालीनत्वं भावसप्तम्यर्थस्तस्य च व्याचष्टे इत्यत्रान्वयः तथा च प्राणनिर्गमनप्राक्कालीनसंसारनिवर्तकोङ्काररूपब्रह्मोपदेष्टा भगवान् रुद्र इत्यर्थः। न चोङ्कारपरत्वं ब्रह्मशब्दस्यापसिद्धान्त इति वाच्यम् "ओमित्येकाक्षरं ब्रह्मेत्यादि" गीतायां "तद्वाचकः प्रण-

श्रुतिः "अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वामोक्षी भवति"। तदुपदेशस्यादृष्टद्वारा शरीरान्तरपरिग्रहाधीनात्मतत्त्वसाक्षात्काररजनकत्वम्। न च मुमूर्षुतादशायां तारकोपदेशे तच्छरीरावच्छेदेनैवात्मतत्त्वसाक्षात्कारसम्भवात् किमर्थं शरीरान्तरस्वीकार इति वाच्यम् तच्छरीरावच्छेदेन तारकमन्त्रोपदेशादात्मतत्त्वज्ञानस्वीकारे काशीमरण हेतुत्वानुपपत्तेः। यदि च काशीमरणकारणताबोधकवाक्यानां तदानामाबोधकस्य तारकोपदेशस्य हेतुतायामेव तात्पर्यम् अन्यथा एकेनापरस्यान्यथासि-

---

व" इति योगसूत्रे च ब्रह्मपदस्योङ्कारवाचकत्वात्। एकेनोपदेशेनापरस्य काशीमरणस्य मोक्षम्प्रतीति शेषः। तत्त्वज्ञानसम्भव इति। तथा चैतन्मते काशीमरणस्य भगवदुपदेशप्रयोजककाशीमरणप्राक्कालज्ञानसम्पादकतया तदुपदेशे प्रयोजकत्वमित्यर्थः। केषाञ्चिन्मतमाह काशीमरणमिति। अस्मिन्मते गङ्गाजलसम्बन्धेन मृतशरीरेऽदृष्टोत्पत्तिवज्ज्ञानोत्पत्तिरिति भावः। अत्र च मते उपदेशस्य शब्दात्मकतया मृतात्मन्यदृष्टजनकत्वे तदवच्छेदकसम्बन्धस्य दुर्वचता, कथंचिच्छरीरान्तरग्रहणेन निर्वाच्यत्वे गौरव मोक्षानुपपत्तिश्चेत्यस्वरसो बोध्यः। वैकल्पिकहेतुतायां संवलिताभ्यां फलानुत्पत्ति-

द्धेर्दुष्परिहारत्वादित्युच्यते तदा तच्छरीरावच्छेदेनापि तत्त्वज्ञानसम्भवो बोध्यः ।

काशीमरणमात्मतत्त्वज्ञाने तारकोपदेशसम्पादने-नैवापेक्षितम् काशीमरणोत्तरमेव च कर्णे भगवान् तारकमुच्चरति । तच्चोच्चारणम् तच्छरीरावच्छेदेन ज्ञानमनुत्पाद्यापि अदृष्टद्वारा तदुत्तरगृहीतशरीरावच्छे-देनात्मतत्त्वज्ञानमुत्पादयतीत्यपि केचित् । काशीगङ्गा-मरणादीनामदृष्टद्वारा संवलनसम्भवेऽपि उक्तयुक्तेर्वै-कल्पिकी कारणतैव तृणादीनां वह्नेरिव । न चैवं संवलितयोर्व्रीहियवयोरिव काशीगङ्गामरणयोः फला-नुत्पादकत्वप्रसङ्ग इति वाच्यम् । वैषम्यात् तथाहि व्रीहियवयोरेकप्रकरणे क्रमेण यागसाधनतया विधा-नाद्यवसाधनत्वेन प्रथमतो लाभे साधनान्तराका-ङ्क्षानुदयात् व्रीह्यकरणको यागः किं करणकः फल-साधनमिति विकल्पमुख्याकाङ्क्षयैव यवविध्युत्थापनं वाच्यम् तादृश्याकाङ्क्षया व्रीहिकरणकत्वाभावविशिष्ट-

---

माशङ्कते न चेति । समाधत्ते वैषम्यादिति । वै-षम्यमेव स्फुटयति तथाहीति । एकप्रकरणे दर्शपौ-र्णमासयागैकप्रकरणे । आकाङ्क्षानुदयादिति । यव-साधनत्वज्ञानस्य प्रतिबन्धकत्वादित्यर्थः । व्रीह्यकरणक

विशेषरूपावच्छिन्नतदितरकारणकत्वविशिष्टयागे फलसाधनताबोधविषयकत्वात् । वाकाराध्याहारेण यवैर्यजेत इति वाक्यात् व्रीहिकरणकत्वाभाववयवकरणकत्वरूपोभयविशेषणविशिष्टयागविषयक एव साधनताबोधः स्वीकरणीयः विशिष्टे च यस्य कार्यस्य साधनतयान्वयो विशेषणस्य तत्कार्यप्रयोजकत्वे वेदस्य तात्पर्यमौत्सर्गिकमिति व्रीहिभिर्यजेतेत्यतो व्रीहिकरणस्यैव यवैरित्यतश्च यवकरणकस्यैव ततो व्रीहिकरणकत्वरूपविशेषणस्यापि फलोपयोगित्वं प्रतीयत इति उभयोरशास्त्रार्थता । प्रकृते च प्रकरणभेदात् विधिप्रवृत्तेः पौर्वापर्यानियमेन मोक्षस्य किं साधनमित्येतावन्मात्राकाङ्क्षयैव साधनत्वेनैव गङ्गामरणकाशीमरणादी-

---

इति । तथा च सामान्यतो यागे व्रीहिकरणकत्वे निश्चितेऽपि तदकरणकयागे जिज्ञासा युक्तैवेति भावः । विशेषरूपेति । यवत्वरूपविशेषधर्मावच्छिन्नेत्यर्थः । वाकाराध्याहारेणेति । तथाच व्रीहिकरणकत्वाभावो वाकारार्थः । स च यागेऽन्वेतीति भावः । ननु यदि यवकरणकत्वयागत्वाभयमात्रं फलसाधनतांशे प्रयोजकं तदोभयकरणकयागस्यापि यवकरणकत्वेन फलसाधनत्वं स्यादत आह विशिष्ट इति । प्रकरणभेदादिति । तथाच मोक्षे काशीमरणजन्यत्वानुपस्थितिकाले मोक्षे किं कारणमि

नां विधानादितरासाहित्यविशिष्टानामेव तेषां मोक्ष साधनतया प्रतीतेः काशीमरणगङ्गामरणभगवन्नारायणस्मरणरूपमंत्रलनेऽपि फलसिद्धिर्निष्प्रत्यूहैवेति। परस्पराभावसापेक्षतया यथा व्रीहियवयोर्विरुद्धरूपता तथा न प्रकृते अपि तु वाजपेयाश्वमेधादिवत् पृथक्कल्पतैव विकल्पे उभयोरशास्त्रार्थतापत्त्वादश्च विरुद्धकल्परूपविकल्पादरः। तत्र पृथक्कल्परूपविकल्पपरः। अथ परस्पराभावसापेक्षता व्रीहियवस्थलेऽप्रामाणिकी प्रथमप्रवृत्तव्रीहिविधितो यवकरणकत्वाभावविशिष्टस्यैव व्रीहिकरणकयागस्य फलसाधनत्वाप्रत्ययनादिति चेन्न तृणनिरपेक्षान्मणिरूपद्रव्याद्वह्न्युत्पत्तावपि तृणाद्वह्निर्जायते द्रव्याद्वेति अप्रयोगात्तदुत्तरवाक्यस्थे-

---

त्येतावन्मात्राकाङ्क्षया गङ्गामरणविध्युत्थानादिति भावः। वैकल्पिककारणतामुभयत्रोपपादयति परस्परेति। पृथक्कल्पता पृथक्प्रधानविधिबोध्यता। विरुद्धेति। विरुद्धकल्परूपे विकल्पे आदरस्तात्पर्यं यस्य सः। तदेवोपपादयति तत्रेति। ननु यवविधिनोभयोरशास्त्रार्थत्वेपि प्रथमव्रीहिविधिना वा साहित्यस्याप्रतिपादनात्कुत उभयकरणकयागे तादृशफलासाधनत्वमित्याशङ्कते अथेति। समाधत्ते तृणेति। यवासाहित्यबोधस्येति। तात्पर्यवशादुत्तरवाक्यगतवाकारस्य पूर्वत्र योजनयेति

नापि वाकारेण पूर्वकल्पाव्यवच्छेदसाहित्यस्य उत्तर कल्प इव उत्तरकल्पाव्यवच्छेदसाहित्यस्यापि पूर्वकल्पेऽपि बोध इति व्युत्पत्तेर्व्रीहिभिर्यवैर्वा इत्यादावपि व्रीह्यादौ यवासाहित्यबोधस्य व्युत्पत्तिसिद्धत्वादित्यन्यत्र विस्तरः ॥

इति श्रीमहामहोपाध्यायगदाधरभट्टाचार्यकृत-
मुक्तिवादः समाप्तः ।

—:०:—

भावः । प्राचीननैयायिकास्तु एकविंशतिप्रकारदुःखध्वंस एवापवर्गः । षडिन्द्रियाणि षड्बुद्धयः शरीरं सुखं दुःखञ्चेत्येकविंशति दुःखपदार्थ इत्याहुः ।

इति श्री म० म० गदाधरभट्टाचार्यकृतमुक्तिवाद-
चन्द्रिका समाप्ता ॥

# प्राचीननवीनमुक्तिवाद-सङ्क्षेपः ।

सालोक्यमथ सारूप्यं सार्ष्टिः सामीप्यमेव च
सायुज्यञ्चेति मुनयो मुक्तिं पञ्चविधां विदुः ॥

तत्र भगवता सममेकस्मिंल्लोके वैकुण्ठाख्येऽव-स्थानं सालोक्यम् । सारूप्यञ्च भगवता सह समान-रूपता, श्रीवत्सवनमालालक्ष्मीसरस्वतीयुक्तचतुर्भुज-शरीरावच्छिन्नमिति यावत् । सालोक्येऽपि चतुर्भुजा-ववच्छिन्नत्वमस्त्येव वैकुण्ठामिनां सर्वेषां चतुर्भुज-त्वात् परन्तु श्रीवत्सादिरूपाशेषविशेषणविशिष्टत्वं न तत्रेति तदपेक्षया तस्याधिक्यम् । सार्ष्टिः भगव-दैश्वर्यसमानैश्वर्यम् कर्तुमकर्तुमन्यथा कर्तुं समर्थत्वात् । सामीप्यञ्च तथाभूतैश्वर्यादिविशेषणयुक्तत्वे सति भगवतोऽतिसमीपे नियतमवस्थानम् । सायुज्यञ्च निर्वा-णम् । तच्च न्यायवैशेषिकादिमते आत्यन्तिकदुःख-निवृत्तिः । सालोक्यादिदशायां दुःखनिवृत्तिसत्त्वेऽपि नासावात्यन्तिकी तस्या क्षयितया तदनन्तरमन्तलक्ष्यर-

मदुःखस्यैवोत्पादादिति न तद्दशायामतिप्रसङ्गः । अतस्सालोक्यादेः स्वतः पुरुषार्थत्वाभावात् तदुत्तरं शरीरपरिग्रहेण बन्धसम्भवाच्च तेषां तुच्छतया निर्वाणमेवोद्देश्यम् । तत्त्वज्ञाने तान्त्रिकाणां प्रवृत्तेर्निर्वाणमेवापवर्गपदशक्यम् अन्येषान्तु गौणमुक्तिपदप्रयोगविषयतेति । अत्रात्यान्तिकत्वं स्वसमवायिसमवेतत्व-कालिकविशेषणतोभयसम्बन्धेन दुःखप्रागभाववदन्यत्वम् । दुःखवदन्यत्वम् वा । नचैवमर्थसमाजग्रस्ततया नीलेतरघटत्वादिवत् मुक्तित्वं न कार्यतावच्छेदकमिति वाच्यम् अर्थसमाजग्रस्तस्य हि कार्यतानवच्छेदकत्वे प्रमाणाभाव एव बीजम् प्रकृते च श्रुतिरूपप्रमाणसत्त्वेनार्थसमाजग्रस्तस्यापि तस्य तत्त्वज्ञानजन्यतावच्छेदकत्वोपगमात् ।

नवीनास्तु चरमदुःखध्वंस एव मोक्षः । चरमत्वञ्च लाघवात् तत्त्वज्ञाननाश्यतावच्छेदकतया तादृशसम्बन्धेन दुःखवदन्यदुःखमात्रवृत्तिदुःखत्वव्याप्यो जातिविशेषः । न च गोवधादिजन्यतावच्छेदकतया जातिभिः सह साङ्कर्यमिति वाच्यम् तस्य तादृशजातीनां विरुद्धत्वात् केवलस्यैव तज्जनकत्वोपगमात् । तत्त्वज्ञानेनाहत्य चरमदुःखमुत्पाद्य तद्ध्वंसजन-

नात् तद्धंसस्य चोत्कटेच्छाविषयतया तत्साधनत्वेन तत्प्रतियोगिनो दुःखस्यानुपादेयत्वात् । नचैवं दुःखपदवैयर्थ्यम् आत्यन्तिकनिवृत्तिरित्यस्यैव सम्यक्त्वादिति वाच्यम् दुःखत्वव्याप्या जातिरिति परिचयाय तदुपादानात् । एतेन खड्गाभिघातादिजन्यतावच्छेदकजातिभिः साङ्कर्यमपि निरस्तम् तादृशजातेस्तत्तज्जातिविरुद्धत्वोपगमात् । न च तत्त्वज्ञानस्यैव तादृशदुःखजनकत्वतन्नाशकत्वोपगमे तादृशदुःखस्य क्षणिकत्वापत्तिरिति वाच्यम् प्रथमक्षणे तत्साक्षात्कारसामग्र्याः प्रतिबन्धेन द्वितीयक्षणे तन्नाशासम्भवात् । नचैवमेतादृशप्रतिबन्धकल्पने गौरवमिति वाच्यम् काशीमरणादिरूपनानाविधोपायजन्यतायां भवन्मते तादृशदुःखत्वदन्यदुःखध्वंसत्वस्यावच्छेदकगौरवात् तदपेक्षया विजातीयदुःखनाशम्प्रति प्रतियोगित्वलौकिकविषयत्वघटितसामानाधिकरण्यप्रत्यासत्त्या साक्षात्कारत्वेन एकप्रतिबन्धकताया न्याय्यत्वादित्याहुः ।

वेदान्तिनस्तु तत्त्वज्ञानादविद्यानिवृत्तौ विज्ञानसुखात्मकः केवलात्मा अपवर्गे वर्तते इति विवक्षितविवेकेन विद्यापनाश एव मोक्ष इति वदन्ति । तन्न

अविद्या आत्मनि शरीराभेदावगाहिज्ञानं पदार्थान्तरम् वा? उभयथापि सुखदुःखाभावतत्साधनेतरत्वेन तन्निवृत्तेरपुरुषार्थत्वात् उत्पन्नतत्त्वज्ञानिनः शुकादेः शरीरदुःखभोगदशायामपि अविद्यानाशसत्त्वान्मुक्तत्वप्रसङ्गाच्च ।

त्रिदण्डिनस्तु आनन्दमयपरमात्मनि जीवात्मनो लयो मोक्षः । लयश्च लिङ्गशरीरापगमः । लिङ्गशरीरमेकादशेन्द्रियाणि पञ्चमहाभूतानि सूक्ष्ममात्रतया सम्भूयावस्थितानि जीवात्मनि सुखदुःखावच्छेदकानि । तथा च सुखदुःखावच्छेदकसूक्ष्ममात्रावच्छिन्नमिलितावस्थितताद‍ृशेन्द्रियसमुद्भूतप्रचयाधिष्ठानात्मकलिङ्गशरीरनाश एव मोक्ष इति पर्यवसित इत्याहुः । तन्न तस्यापि स्वतोऽपुरुषार्थत्वात्ताद‍ृशलिङ्गशरीरे प्रमाणाभावाच्च ।

प्राभाकरास्तु आत्यन्तिकदुःखप्रागभावो मुक्तिः । आत्यन्तिकत्वं च स्वसमानाधिकरणयावदधर्मनाशविशिष्टत्वम् । तेन संसारिताद‍ृशायां नातिप्रसङ्गः । न च प्रागभावस्यानादित्वेन सिद्धत्वादपुरुषार्थत्वम् । तस्य स्वतः कृत्यनपेक्षितत्वेपि प्रतियोगिजनकाधर्मनाशमुखेन कृतिसाध्यत्वात् । तथा हि कृत्यधीनतत्त्वज्ञानादधर्म-

नाशे सति अग्रिमसमये दुःखप्रागभावस्वरूपमस्ति कृत्या विनाऽधर्मेण दुःखजननाच्च तत्प्रागभावस्वरूपमस्तीति मोक्षसाधारणकृतिसाध्यत्वं प्रागभावेऽप्यक्षतम् । न चैवमावश्यकत्वाद्युगपदधर्मनाश एव मोक्षोऽस्तु युगपत्त्वं चैककालावच्छेदेनैकात्मवृत्तित्वं तेनेदानीन्तनाधर्मनाशे नातिप्रसङ्ग इति वाच्यम् अधर्मध्वंसस्य स्वतः पुरुषार्थत्वासम्भवात् दुःखप्रागभावस्य तु दुःखप्रागभावत्वेन स्वतः पुरुषार्थत्वाविरोधात् 'इति व्याचक्षुः । तदपि हेयम् प्रागभावस्य प्रतियोगिजनकत्वानियमेन मुक्तस्यापि दुःखोत्पादप्रसङ्गात् । प्रतियोग्यजनकत्वे प्रागभावे मानाभावात् तस्य प्रतियोगिमात्रप्रमाणकत्वात् । नचैवमपि प्रायश्चित्तेऽपि दुःखप्रागभावार्थितया प्रवृत्तिर्न स्यादिति वाच्यम् । इष्टत्वात् ।

स्वातन्त्र्यं मृत्युर्वा मोक्ष इति चार्वाकाः । आत्मोच्छेदो मोक्ष इति माध्यमिकाः । धर्मिनिवृत्तौ निर्मलज्ञानोदयो महोदय इति विज्ञानवादिनः । आवरणमुक्तिर्मुक्तिरित्यार्हताः । सर्वकर्तृत्वमेकं विहाय वासुदेवस्य सर्वज्ञत्वादीनां कल्याणगुणानां प्राप्तिमत्त्वे सति भगवद्याथात्म्यानुभवो मोक्ष इति रामानुजाः । जगत्कर्तृत्वलक्ष्मीश्रीवत्सवर्जं

विष्णोर्निरवधिकानन्दादिमहत्त्वानन्दो मोक्ष इति माध्वाः। द्विभुजकृष्णेन सह स्वांशभूतानां जीवानां गोलोके लीलानुभव इति वल्लभीयाः। चन्द्रचूडवपुषः सतः पार्वत्यालिङ्गनमिति कापालिकाः। पूर्णात्मतालाभ इति प्रत्यभिज्ञात्वादिनोऽभिनवगुप्तपादाः। पारदरसपानेन देहस्थैर्ये जीवन्मुक्तिरेव मोक्ष इति रसेश्वरवादिनो गोविन्दभगवत्पादाचार्यादयः। पराख्यप्रथमवार्णाद्युद्दर्शनं मोक्ष इति वैयाकरणाः। प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं मुक्तिरिति साङ्ख्याः। पुरुषस्य कैवल्येनावस्थानं कैवल्यमिति पातञ्जला इति। एतेषां मण्डनखण्डनप्रकारस्तु सुधीभिस्तत्तद्ग्रन्थेषु स्वयमूहनीयः।

इति प्राचीननवीनमुक्तिपदार्थसङ्क्षेपः।